त्वं सारभूतोऽसि मुनीश्वराणाम् ।
विगलितमदमानलोभमोहः प्रशमितवृत्तिरुमेश तर्षचेताः ।
धृत भसितवरो वराक्षमालः
श्रुतिमूर्धन्य मनोविचारशूरः ।

*इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्य प्रसाद करणं नाम – पञ्चमोऽध्यायः*

## ॥ षष्ठोऽध्यायः ॥

**जैगीषव्यः -**

त्वमेव देव देवेश पिता माता सखा प्रभुः ।
त्वमेव सर्वं देवेश विश्वेश्वर महेश्वर ।
न जाने गिरिजाजाने त्वत्तो नान्यं (ह्यन्यं) सुरेश्वरात् ।
तस्मात्प्रसीद भगवन् करुणासागराधुना ।
प्रपन्नोऽस्मि पदद्वन्द्वं निर्द्वन्द्वं ते महेश्वर ।
भ्रातरौ स्कन्दहेरम्बौ सखायौ (यो) गणपा मम ।
जगतां जननी गौरी जनित्री मम शङ्करी ।
जगत्पिता त्वमम्बेश (त्वमेवेश) पिता मम महेश्वरः ।
नान्यं वरं वृणे देव त्वत्पादम्बुजभक्तितः ।
सैव धर्मार्थकामादिमोक्षहेतुर्ममाधुना ।
यया भक्त्या महादेव मुक्ताःसर्वे सुरासुराः ।
त्वद्भक्त(क्त) एव जगति मुक्तान्यान् (मुक्तोऽन्यान्) मोचयन्त्यपि (त्यपि)

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

त्वद्भक्त्यैव विधिर्विश्वं सृजत्येव महेश्वर ।
त्वत्तो वेदानधिगतः सत्यलोकाधिपोऽभवत् ।
पद्मसद्मापतिश्चापि जातो रुद्रस्त्वदाश्रयात् ।
दत्वा शूलवरं तस्मै रुद्रायामिततेजसे ।
रुद्राणामाधिपत्येच त्वया सोऽप्यभिषेचितः ।
यस्य शूलानलज्वालादग्धमन्ते चराचरम् ।
शक्रो महेन्द्रतां प्राप्तस्त्वद्भक्त्यैव हराधुना ।
शचीपतित्वं सम्प्राप्य नानास्वर्गैकभोगभाक् ।
धनाधिपत्यं धनदस्त्वद्भक्त्यैव महेश्वर॥
यमोऽपि त्वत्पदार्चातो लोकपालोऽभवच्छिव ।
वरुणो यादसां नाथः सूर्यचन्द्रानलानिलाः ।
समर्चयन्ति त्वल्लिङ्गभक्त्या सर्वे सुरासुराः ।
सहस्रभुजतां प्राप्तो बाणो भक्त्या तवेश्वर ।
पौलस्त्यतनयः शम्भो रावणो लोकरावणः ।
जिग्ये सुरान्नृपवरान् त्वद्भक्त्यैव महेश्वर ।
घटोद्भवेन त्वद्भक्त्या समुद्राश्चुलुकीकृताः ।
दधीचिनापि त्वद्भक्त्या विष्णवे रूपमद्भुतम् ।
दर्शितं मायिने शम्भो भृगुणा शपितो हरिः ।
उपमन्युना च बालेन लब्धः क्षीरैकवारिधिः ।
त्वद्भक्त्या कालपाशैश्च पाशितोऽपि मृकण्डुजः ।
जिगाय मृत्युं तरसा श्वेतोऽपि नृपनन्दनः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शिलाशनेन त्वद्भक्त्या पुत्रः प्राप्तो ह्ययोनिजः ।
त्वद्भक्त्या नन्दिकेशोऽपि गाणापत्यमवाप्तवान् ।
चण्डीश्वरोऽपि पितरं हतवांस्तव भक्तितः ।
मङ्कणोऽपि पुरा सिद्धःसिद्धिं प्राप त्वदर्चनात् ।
सोमोऽपि मुक्तवान् राजा यक्ष्मतस्त्वत्प्रसादतः ।
दक्षोऽपि दीक्षितो यज्ञे शिक्षितोऽनुग्रहीकृतः ।
शतर्चनादयोऽपीश व्याघ्रपादादयस्तथा ।
दुर्वासाद्या महाभागा देवदत्तादयस्तथा ।
रामोऽपि भार्गवः शाम्भो नृपाणां कुलघातकः ।
तथैवान्ये नृपतयः सोमसूर्यान्वयोद्भवाः ।
आदितेयाश्च दितिजा गणा रुद्रा मुनीश्वराः ।
भूता भव्या वर्तमाना भक्तास्त्वद्भक्तिभाविताः ।
तव भक्त्यैव सर्वेषां भोगमोक्षौ हि शङ्कर ।
त्वद्भक्तिमेव याचेऽहं त्वनन्यगतिरीश्वर ।
हिमाद्रौ स्थापिते लिङ्गे मम जैगीश्वराभिधे ।
केदारात्पश्चिमे शम्भो तस्मिन्नित्यं त्वमावस ॥

सूतः-

इत्युक्तो मुनिना तेन महादेवो गिरीन्द्रजाम् ।
सुराणां च मुनीनां च श्रृण्वतां प्राह शङ्करः ।

ईश्वरः-

कथामाकर्णयापर्णे कर्णाभ्यर्णविलोचने ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तूर्णं तूर्ण(पूर्ण)पदप्राप्त्यै भवार्णवनिवासिनाम् ।
कृतलिङ्गमहासद्म पद्मसद्मापि सद्मगा ।
तेषां नित्यं भवेदेव यैर्वाऽकारि शिवालयः ।
तपांसि तेन तप्तानि शीर्णपर्णाशनान्मुने ।
तेनेष्टाः सकला यागास्तेनाधीतं श्रुतं शिव ।
केदाराख्यं त्वत्पितुर्मौलिसंस्थं
लिङ्गं चैतत् सर्वदा मुक्तिबीजम् ।
केदारेऽस्मिंस्त्वत्पितुश्चारुमौलौ
भूमानन्दं चाङ्कुरं तच्च मुक्त्याः ॥
एतल्लिङ्गात्पश्चिमे चामुना मे
नाम्ना स्वेनाप्यर्चितं पश्य लिङ्गम् ।
प्रतिष्ठिते येन केनापि लिङ्गे
तिष्ठामीशे सर्वथैवातितुष्टः ॥

तस्मिंत्सदैवावहितो भवामि
भवानि नित्यं सुखदोऽति हर्षितः ।
भवानि मुक्त्यै प्रथिते प्रदोषे
प्रकाशने पूजनभावनेऽपि ।
यःकश्चिद्भुवनेश्वरि त्रिभुवने(च) उत्तुङ्ग तुङ्गालयं
रम्यं द्वारकवाटतोरणमहाप्राकारसद्गोपुरम् ।
विद्युत्पुञ्जसमप्रभामलमहाहेमैककुम्भोल्लस-
त्कृत्वा जन्मशतार्जिताखिलमहापापैर्नरो मुच्यते ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

रम्ये शैलवरे सरित्तटवरे ग्रामे पुरे पर्वते
　　तीर्थे वा विपिने गिरीन्द्रवरजे गङ्गातटे नार्मदे ।
तीरे वापि ममेश्वरेश्वरि महाक्षेत्रेषु लिङ्गं दध-
　　त्सर्वत्रापि शुचौ शुचिः स महिमा तस्यातिपारो दिवि।
आढ्यो वापि दरिद्रशेखरनरो भक्तिः परं कारणं
　　कृत्वा चापि शिवालयं सुखयुतो भूमौ विमुक्तस्ततः ।
मृद्दारुप्रभवं शिलेष्टककृतं रम्यं सुधाच्छादितं
　　दिव्यं सन्मणिकल्पितं भवहरं सद्यो विजायेत मे ॥
क्लृप्तं चारु शिवालयोत्तमलसत्तुङ्गं हि लिङ्गं मम
　　प्रातिष्ठाप्य सुवस्त्रचन्दनघनासारैश्च बिल्वार्चकः ।

किं मत्तेभसुहेमभूमितुरगैर्गोभिश्च रत्नोद्भवैः
दानैर्यागवरैश्चिरार्जितमहाधर्मैश्च किं वा शिवे ।
योगैर्वा नियमैर्व्रतैरथ तपस्तीर्थाटनेनापिकिं
कन्यान्नादिकदानतोऽपि हि वरं लिङ्गालयं यैःकृतम् ।
पातान्तावधिसुन्दरं कृतमहाधर्मैकजालं शिवे
मल्लिङ्गालयकल्पकस्य सुतरां पाताद्भयं नास्ति वै ॥
यावच्चन्द्रसुतारकागणमुमे यावत्सरिच्छैलकाः
तावन्मे गणपोत्तमो हि स भवेत्कैलासमौलौ शिवे ।
खण्डं वा स्फुटितं तथा परकृतं जीर्णं विशीर्णं तथा
तस्योद्धारमुमे करोति सुकृतैर्यःश्रद्धया केवलम् ॥
किं वक्ष्यामि सदैव तस्य हृदये नित्यं निवासो मम

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तस्यान्ते वितरामि मुक्तिमखिला(तुलां)वक्ष्ये रहस्यं तव ।
को वा लिङ्गवरं प्रदोषसमये येनार्चि बिल्वैःशुभैः
एवं चापि चराचरं त्रिभुवनाध्य(भ्य)ध्यक्षतामावहेत् ।
भूमौ पुत्रकलत्रमित्रसहितो धान्यैर्धनैःसंयुत
श्चान्ते चापि विमुक्तिमेति नितरां लिङ्गार्चनादेव मे ॥
तैलैर्वा विविधैर्घृतैः पशुभवैः गव्येन वा केवलं
प्रोद्बोध्योज्ज्वलदीपजालमगजे कृत्वैव दीपावलिम् ।
पद्मेभोत्तमहंसतारकगणाकारावलिं मद्गृहे
रम्यामुज्वलवर्तिकामघकुलं ज्वालीकृतं तेन वै ।
धूपैर्वा त्वगरूद्भवैरपि महासाम्राणिसद्गुग्गुलु
बिल्वत्वग्घृतयुक्तगन्धसुभगामोदैः शिवे केवलम् ॥
दग्ध्वा याति पदं मम त्वघकुलं सर्वं कृतार्थो भवेत्
ज्ञानं चापि समाप्नुयात्सुनिशितं वेदान्तवाक्योद्भवम् ।
कर्पूरोद्भवखण्डषण्डजमहाज्वालालसद्दीपकै-
रुज्ज्वाल्य प्रमथाधिनाथजमहालिङ्गे तमोऽलिं भिनत् ॥
पापाद्रेःकुलिशं भवत्यथ शिवे तद्दीपदाने मयि
प्राप्नोत्येव कुलोन्नतिं वरसुतान् प्राप्नोति शम्भोःपदम् ।
गव्यैःकापिलजैस्तथेतरगवां सारैः पयोभिर्घृतैः
दध्ना चाप्यधिकं फलेन शतशःक्षौद्रेण चाक्षुद्रताम् ।
प्राप्नोतीक्षुरसेन गन्धसलिलैः पुष्पोत्थरत्नोदकैः
स्वर्णोत्थैरभिषिच्य लिङ्गममलं प्राप्नोति मुक्तिं शिवे ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पुण्ड्रेक्षुप्रभवैश्च सद्रसवरैर्मोचाफलानां गणैः
नालीकेररसालसारसरसैर्जम्बीरनीरैरपि ॥
उत्कोचैः पनसोद्भवैर्मम महालिङ्गेऽभिषिच्यादरात्
प्रातः सङ्गवकालतोऽप्यतितरां सायं विमुक्तो भवेत् ।
ग्रीष्मर्तौ मम लिङ्गसङ्गतमहामौलौ गलन्ती झरी-
धारासारसुपाटलागरुरसैः पुष्पाम्बुभिः पूरितैः ।
धाराकल्पनजेन यत्फलमुमे तत्केन वा शक्यते
वक्तुं जन्मशतायुतार्जितमहापापैर्विमुक्तो भवेत् ।
उत्फुल्लैः कमलैः सितासितवरैः सन्मल्लिकामालती-
जाजीकुन्दसुपाटलैर्बकमहाधुत्तूरद्रोणार्ककैः ।
कल्हारैः कुमुदैः जपादमनकैरुत्फुल्लदाडिम्बकैः
पुन्नागार्जुनचम्पकैर्बकुळकैर्मन्दारबाल्हातकैः ॥
नीलोद्यद्द्विकचोत्पलैः कुरबकैः सत्कर्णिकारैः शिवं
नन्द्यावर्तशिरीषबिल्वकुसुमै रक्ताश्वसारैः शितैः ।
जम्ब्वाम्रैश्च पलाशकैः शमिसुमैर्दूर्वापमार्गादिभिः
विष्णुक्रान्तकुशैश्च काशजनितैरभ्यर्च्य मुक्तोऽम्बिके ॥
प्राप्नोतीष्टमहेतुकं भगवतः शम्भोः कटाक्षाङ्कुरैः
लिङ्गे पुण्यतमे प्रदोषसमये पुण्येषु कल्पेष्वपि ।
मौद्गल्योऽथ शतर्चनात्रिभृगवो धौम्याग्रजो गौतमः
मार्कण्डेय दधीचि गर्ग उशना मुञ्जो करिः शौनकः ।
दुर्वासा जमदग्निजोऽङ्गिरवराः दत्तोऽत्रिजो व्याघ्रपात्

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

जाबालिश्च दधीचिमित्रजनितः कुम्भोद्भवःशैलजे ।
देवेषु प्रथितो विधिश्च मुरभिच्छक्रो यमोऽग्निर्मरुत्
पाशी यक्षपतिर्यमोऽथ निरृतिश्चेशानमुख्या गणाः ।
स्कन्दश्चेभजवक्त्रको गणवरो नन्दीशभृङ्गीश्वरा —
स्तुण्डुश्चण्डिरिटी सुभद्रकवरो वीरो महाभैरवः ।
शैवेन्द्रा भसितत्रिपुण्ड्रनिटिला रुद्राक्षमालाङ्गदा
रुद्रावर्तनलोलशीलमनसो लिङ्गार्चका मे शिवे ॥
अन्येऽमी मुनयो गृहाश्रमरताः श्रान्ताः परं संसृतौ
नानादैवतपूजनेन कुधियो जानन्ति मां नो शिवे
कानीनस्त्वयमप्युमे विधिवशात्सम्प्राप्य मे काशिकां
मत्सान्निध्यगतोर्ध्वबाहुरसकृद्व्याचष्ट देवं हरिम् ॥
तस्मान्नार्हति वक्तुमप्यतितरां श्रोतुं मदीयं रहः
पुण्यं मुक्तिरहस्यमेतदनवं शिष्येषु पात्रेष्वहो ।
त्वं सम्यक्प्रतिपादयाशु भसितोद्धूलेषु मत्प्रेमजा-
पारावारमहाम्बुमग्नमनसां पुण्येषु शैवेषु च ॥
जैगीषव्य मुनीन्द्र दापय परं शैवं रहस्यं मम
नाख्येयं शिवभक्तिवर्जितमुनौ पुण्यं त्विदं मुक्तिदम्
दत्वा भक्तिविहीनमानववरे पापं महत्प्राप्नुयात्
किञ्चाप्नोति वृथाश्रमं सुनिशितं पात्रे यथामे जलम् ।
सूतः-
देव्या दृष्ट्वा मुखाब्जं त्रिणयननयनानन्दसन्दोहबीजं

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

उत्फुल्लामलकैरवोपममुखं श्रीपार्वतीनायकः ।
दृष्ट्वा चापि मुनिं विशिष्टमनसं शिष्टाद्विशिष्टं तदा
अष्टाङ्गाखिलयोगजालनिकरैः पूतैकसन्मानसम् [:] ॥

**ईश्वरः-**

पूतोऽयं भुवनेश्वरि त्रिजगतामीशे मुनिः शाङ्करः
पुत्रस्ते निखिलागमैकरसिको भूयात्त्वयालोकितः ।
सम्प्रत्येष तवाननाब्जविकचत्सूर्यस्य षड्वक्त्रतः
प्राप्नोतु प्रसभं मदीयमहसा सारं जगत्पावनम् ।
स्कन्दः स्कन्दिततारकस्तव शिवे पर्यङ्कभूताङ्कगः
शुश्रावाखिलमङ्गलं त्वयि मया सम्प्रोक्तमेतच्छुभम् ।
षड्भिः स्वैर्वदनच्युतामृतरसैः पूतस्तु चैनं मुनिं
शैवैरद्य रहस्य सम्भवकथाधारासुधाशीकरैः ।
जैगीषव्यमुखाब्जतो मुनिवराः श्रृण्वन्तु शैवं रहः
शैवा एव भवन्तु तच्छतमहानन्दैकबोधाः सदा ।
नान्येषां मतिरस्ति शङ्करकथापीयूषपानोत्सवे
भक्त्युत्थामृतपानपीनमनसो देवि स्फुटं केचन ।
वेदान्तार्थविचारसारसुगमं शैवं रहस्यं मया
देव्यै दत्तमतस्तया बलवता स्नेहेन दत्तं मुने ।
स्कन्दायासुरशिक्षकाय दद तां गच्छाधुना तं प्रती-
त्युक्त्वा (सौ)गिरीजामनोहरवचः श्रुत्वा मुनिर्निर्ययौ ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नत्वा शम्भुपदं जगाम रभसा युक्तो मुनीन्द्रैरपि
देवश्चापि मुदा ययौ पशुपतिः देव्या सुरौघैर्वृतः ।
कैलासं गणपोत्थवाद्यनिकरैर्देवैः स्तवैः संप्लु(स्तु)तः ।
— — — — — — — — — — — — — ॥

इलामिलन्मौलिरथो महात्मा
जैगीषविप्रोऽध्वरराजमीशम् ।
सम्पूज्य नत्वाभिजगाम शम्भुं
स्कन्दाय च स्कन्दमुदार्थवेदने ।

*इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्याऽऽगमनं नाम - षष्ठोऽध्यायः*

## ॥ सप्तमोऽध्यायः ॥

**सूतः-**

इत्युक्त्वा प्रययौ देवः कैलासं शङ्करालयम् ।
नन्दिभृङ्गिगणौघेन सुरासुरवरार्चितः ।
जगज्जनित्र्या देव्या च महावृषभवाहनः ।
जैगीषव्यो मुनिर्नत्वा महादेवपदाम्बुजम् ।
ध्यायन्नभिजगामैव स्कन्दं क्रौञ्चविदारणम् ।
उपाययौ मुनिवरैः शैवेन्द्रैर्भक्तितत्परैः ।
मार्कण्डेयोऽथ मौद्गल्यो जमदग्निर्भृगुस्तथा ।
दुर्वासाश्च्यवनो गर्गो वीतहव्योऽनिलाशनः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

गौतमोऽत्रिर्भरद्वाजो दाल्भ्यो हयशिरा मनु:(मुनि: ?) ।
उचथ्योऽग्निध्वजश्चैव दधीचिर्मौनिभार्गव: ।
व्यास: पराशरोऽकुण्ड: कविराङ्गिरसो मधु: ।
उपमन्युर्विशारदश्च तुहण्ड: कवषो ध्रुव: ।
जाबालि: काश्यपो मित्रो नारदस्तुम्बुरुस्तथा ।
पर्वतो ह्याणिमाण्डव्यो दण्डी व्याघ्रपदो हनु: ।
वेदगर्भो वीतिहोत्र: कण्वो मेधातिथिर्धनु: ।
शौनकस्ताण्डकश्चैव मित्रविन्दोऽनमित्रक: ।
हयग्रीव: पिप्पलादो दत्तात्रेयोऽविकत्थन: ।
अगस्त्योऽप्यनिलाशश्च शतर्चा आश्वलायन: ।
सनन्द: सनकश्चैव कुमारश्च सनातन: ।
एवमाद्याश्च मुनय: शैवेन्द्रा: शिवसम्मता: ।
अग्निरित्यादिभिर्मन्त्रैर्भस्मोद्धूलनतत्परा: ।
त्रियायुषैस्त्रिपुण्ड्राङ्का रुद्राक्षाङ्गदकङ्कणा: ।
पञ्चाक्षरजपासक्ता: पञ्चास्यध्यानतत्परा: ।
अथर्वशिरसा देवं पूजयन्ति जपन्ति च ।
केचिच्छिखाजपासक्ता: केचित्कैवल्यजापका: ।
प्रणवाभ्यासनिरता: केचिज्जाबालजापका: ।
बृहद्रथन्तरं वामदेव सामादिजापका: ।
संहिताभिस्तथा साम्ना ऋचां च यजुषां तथा ।
रुद्राध्यायजपासक्ता: पञ्चास्यध्यानतत्परा: ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शिवनैवेद्यभोक्तारो नियमाद्बिल्वपूजकाः ।
वैराग्यभाग्यनिरता नित्यानित्यार्थकोविदाः ।
वेद वेदार्थ तत्वज्ञा दृढप्रज्ञा मनीषिणः
नृ(त)पसां राशयः_(सर्वे) (स) दाराःशिवतत्पराः ।
शिवनामजपासक्ताः सर्वदा शिवचिन्तकाः ।
अग्निहोत्रपराः सर्वे यज्ञाद्यैर्दग्धकिल्बिषैः(षाः) ।
शिष्यप्रशिष्यसहिता आगतास्ते नभोऽध्वना ।
स्कन्दाश्रमं सरस्वत्यास्तीरे पावनपावनम् ।
नानास्कन्दगणोपेतं देवगन्धर्वशोभितम् ।
नीलाद्रिशिखरे पुण्ये नानातरुविराजितम् ।
बर्हि वृ(नृ)त्तारवैश्चैव पुंस्कोकिलविनादितम् ।
शुकशारिकसङ्घुष्टं कपोतकृतहुङ्कृतैः ।
मृदङ्ग मुरजाघोषैर्वीणाताळलयानुगैः ।
प्रणृत्तकिन्नरानीकमुत्फुल्लकमलाकरैः ।
स्कन्दालयमपश्यंस्ते नानारत्नविराजितम् ।
गोपुराट्टालवलभीवप्रप्राकारशोभितम् ।
सुवर्ण खचितानेक नवरत्नविराजितम् ।
पर्यङ्कास्तरणैर्दिव्यैः सिह्मनादवरैर्युतम् ।
गान्धर्वैर्नागवकुलैरुपेतं गीतवादनैः ।
सिह्मासनस्थं वरदं षट्चक्रमकुटोज्वलम् ।
हेमपीताम्बरधरं चलच्चामरवीजितम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

क्वण(कन)त्कनकवस्त्रैश्च चित(चित्र) कुण्डलशोभितम् ।
महार्हरत्नमालादिमुक्तासरसुकन्धरम् ॥
शक्तिहस्तं महाशक्तेस्तनूजमतिसुन्दरम् ।
ददृशुर्मुनयः सर्वे स्कन्दं क्रौञ्चविदारणम् ।
प्रणम्य जैगीषव्याद्या मुनयः स्कन्दमव्ययम् ।
तेन निर्दिष्ट विष्टब्धविष्टरा मुनयः सुखम् ।

नभस्पृगायाति समीरगत्या
भस्मावधूताखिलपापसङ्घः ।
शरन्नाभाभः परिपूर्णचन्द्रभा-
स्समालुलोकेऽद्रितनूभवा[भवः] ।
जैगीषव्यमुखाब्जलोकनमहानन्दाम्बुधेर्मध्यग
स्वस्यैवान्तिकमागतं पुरभिदा सम्प्रेषितं ज्ञातवान् ।
पात्रं वीक्ष्य महेशमित्रहृदयग्रन्थार्थसम्बोधने
हृष्टः पुष्टतनुः प्रकृष्टवचसामुद्बोधबोधे मुनिम् ॥
जैगीषव्याङ्गसङ्गस्फुटपुलकततिः शैववर्यं षडास्यो
नेत्रैर्व्यालोक्य हृष्टो भसितधवलितस्वान्तगात्रो मुनीन्द्रम् ।
मेने मेनातनूजात्मजवरवरणे धारणे वीतरागम्—

स्कन्द उवाच

त्वदागमनसम्भ्रमाद्भ्रमततिःप्रणष्टा मम
शिवेन कथितं पुरा शिवरहस्यधर्माभिधम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

समुद्रमिव सिन्धुभिः शिवकथासुधावारिधौ,
समुल्लसति मन्मनस्तदपि बोधहेतुस्त्वयि ।

पचेलिमतपः फलैरमितपुण्यसङ्घार्जितै-
र्भवानपि समागतस्त्रिपुरवैरिसम्प्रेषितः ।
मुनिष्वपि विशेषतस्त्वयि दया महेशस्य या
न कोऽपि भुवनत्रये प्रमथनाथलिङ्गार्चकः ॥

*इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्य-स्कन्द समागमो नाम सप्तमोऽध्यायः*

## ॥ अष्टमोऽध्यायः ॥

**सूत उवाच –**

उपोपविविशुर्हृष्टाः षडानन विलोकनात् ।
हृष्टास्ततस्ते शैवेन्द्रा अष्टमूर्तिकृपास्पदाः ।
ऊचुः प्राञ्जलयः सर्वे जैगीषव्यपुरोगमाः ।

मुनयः (ऊचुः)

स्कन्द त्रिपुरसंहर्तृतनूभव सुखास्पद ।
क्रौञ्चोन्माथ गिरीश्रेष्ठ शूरादीनां विदारण ।
शिवज्ञानसुधाम्भोधे सशक्ते चाखिलार्थद ।
कुमार मारसङ्काश प्रपन्नजनवत्सल ।
शिवाङ्कभूतपर्यङ्क सर्वभूतहृदन्तर ।

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वीरबाहुमुखानेकगणोत्तमनिषेवित ।
शिखिवाहामरेन्द्रादिसेनापालक हे प्रभो ।
प्रणवादिमहावाक्यसारसार विचारक ।
भक्तहृत्पद्मसन्देह (दोह) तमस्तोमनिवारक ॥
ज्ञानोदयोद्यन्मार्ताण्ड प्रचण्डतरविक्रम ।
तव पादाम्बुजद्वन्द्वविलोकनहताशुभाः ।
जैगीषव्यस्य तपसा दृष्टोऽस्माभिर्महेश्वरः ।
तेनाज्ञप्ता वयं सर्वे जैगीषव्यपुरःसराः ।
त्वद्वाक्पङ्कजनिष्यन्दमकरन्दमधुव्रताः ।
पातुं शिवरहस्याख्यममृतं भवनाशकम् ।
प्रयाताः पुण्यभारेण तव सन्निधिमुत्कटाः ।
सन्तप्तान्भवतापाग्निमध्यस्थानधुना मुनीन् ।
सुधाशीकरया दृष्ट्या शीतयाशु प्रसीद नः ।
इत्थं मुनीनां वचनं श्रुत्वा स्कन्दो हरात्मजः ।
प्रसन्नचेतास्तानाह शाम्भवान् हरनन्दनः ।

स्कन्दः (उवाच)

जैगीषव्यमुखा यूयं मुनयो भावसत्तमाः ।
भवभावैकसम्पन्ना भक्ताः सर्वे महेश्वरे ।
भवतां दर्शनेनैव भावनानन्दितं मम ।
मनसः पद्ममुत्फुल्लं मुनेः श्रुत्वा तपः क्रियाम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

प्रसादोऽपि महादेवात् जैगीषव्यस्य सत्तमाः ।
शिवाज्ञया समायातो जैगीषव्यो महामुनिः ।
भवद्भिः शाम्भवैः सार्धं मया ज्ञातं हृदैव हि ।
पात्रभूता भवन्तो हि त्रिणेत्रपदपूजकाः ।
यद्गोप्यमपि तद्वक्ष्ये रहस्यं शिवहृद्गतम् ।
शिवाङ्कसंस्थेन मया श्रुतमेतत्पुरातनम् ।
द्वादशांशसमायुक्तं देव्यै देवेन दर्शितम् ।
पुण्यं पापहरं चैतत्सर्वश्रुतिशिरोगतम् ।
भवान्यै च भवेनैव कथितं भवनाशदम् ।
कथानकं श्रुतिशिरःप्रणवार्थं महाघभित् ।
जैगीषव्याग्रगा यूयं श्रृण्वन्तु(?)परमार्थतः ।
धर्मकामार्थमोक्षाणां सारभूतमिदं शुभम् ।
श्रुत्वेदं हि कथारत्नं शङ्करस्य परात्मनः ।
श्रोतुमन्यन्न रोचेत यथान्याः प्राकृताः कथाः ॥
सृष्टिस्थित्यन्तकथनैर्नृपाणां चरिताश्रयैः ।
वर्णाश्रमैककथनश्रमभारैः कथानकैः ।
धर्माभासकथाभिः किं यथा शम्भोः कथारसम् ।
किमन्धकूपमध्यस्थस्तमसा परिवेष्टितः ।
अन्यानन्धान्पूरयेत तथैवान्यकथा मुने ।
पुराणेषु प्रकथितैः किन्तु चर्वितचर्वणैः ।
जन्ममृत्युयुतानां च सुराणां मुनिपुङ्गवाः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कथाः कथं तारयन्ति जन्ममृत्युजरायुतान् ।
श्रीमन्मृत्युञ्जयस्यैव कथा मृत्युविवर्जितान् ।
करोति जगतां विप्राः शैवाः शिवरहस्यगाः ।
सुरा (धा)सागरमध्यस्थः सिन्धु(किंनु) कूपोदकं पिबेत् ।
क्वणद्वीणादिनिनदं श्रुत्वा काकरवं यथा ।
यथा रत्नाकरं प्राप्य काचखण्डमपेक्षते ।
यथा मत्तेभसदृशः किं मलाशनकृत्किटिः ।
यथा मृगेन्द्रसदृशो वानरः किं द्विजोत्तमाः ॥
तथैवान्यकथासक्तास्त्यक्त्वा शिवकथारसम् ।
यथा शिवो महादेवःसर्ववेदान्तसंस्तुतः ।
तथा शिवरहस्याख्यमितिहासवरं मुने ।
शिवकण्ठमणिश्चायं पापमोचकमोचकः ।
पुरा कैलासशिखरे देव्यै देवेन कीर्तितम् ।
प्राह देवं विरूपाक्षं अम्बिका परमेश्वरी ।

देव्युवाच-

शम्भो विश्वेश भर्ग त्रिणयन पुरहृत् कालकालान्धकारे
पापारे फालनेत्र स्मरहर गरप त्राहि देवान्द्विजांश्च ।

कथय तव रहस्यं येन मुक्ता त्रिलोकी
निगमशिरसि निष्ठा का गरिष्ठा वदाद्य ।
यदि तव करुणाब्धे शीकरासारपात्रं


CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मम श्रुति वरपात्रं त्वं कृतार्थीकुरुष्व ॥

तव चरितमशेषं लोकदुःखापनुत्यै

पुर हर कुरु कर्णे मामकीने दयस्व ।

सुगोप्यमपि शङ्कर प्रमथनाथ विश्वाधिक

निधेहि मयि तत्स्थिरं चिरमपि प्ररूढं त्वयि ।

त्वदीयदयया परं प्रकटितान्तरङ्गं मम

त्वदीयचरणाम्बुजे सकलभक्तिभावैर्युता ॥

इति देव्या वचः श्रुत्वा प्राह कामाङ्गनाशनः ।

स्वाङ्कसंस्थां महादेवीं तदङ्कस्थेन यत्पुरा ॥

मयाश्रावि कथासिन्धुरहस्यं तद् ब्रुवेऽधुना ।

भवानां भवनाशाय भवभक्तिविवर्धनम् ।

**ईश्वर उवाच -**

नादेयं तव विद्यते त्रिभुवने शैलेन्द्रजे केवलं

देहार्धेऽधिकृतासि विश्वजननी नीरूपरूपस्त्वया ।

विश्वं पासि यथास्ति शक्तिरखिला देवि त्वया शक्तिमान्

उक्तोऽहं श्रुतिभिः निरिन्द्रिय इति त्वत्तोऽस्मि देहं गतः ॥

अपाणिपादोऽहमलुप्तशक्तिः

पश्याम्यचक्षुश्च श‍ृणोम्यकर्णः ।

अहं विजानामि समस्तमेतत्

सहैव सन्तं न विजानन्ति देवाः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शीर्णेष्वशीर्णोऽहमजः शरीरी

शरीरहीनोऽस्मि सदा ह्यसङ्गः ।

वेदाश्च वेदान्तवचो यतो मे

निवृत्तभावा मनसा सहाम्बिके ॥

कथं पामरा वानराकारचेष्टाः

सदा कामलोभादिमात्सर्ययुक्ताः ।

वराकाः शरावादिहस्ता अटन्ति

सुराश्चासुराश्चासुरा भूसुराः किम् ॥

लभन्ते त्वमेकाकिनी स्कन्दमुख्या

मदीयप्रकृष्टप्रभावैकतर्षाः ।

यतो भावलभ्यैकमूर्तिं महेशं

सदा वेदवेदान्तवाचां दुरापम् ।

विजानासि देवि त्वमाद्यं ममाद्यं

सदा शुद्ध(बुद्धो)चिदानन्दरूपम् ।

त्रिणेत्रं गराधारकण्ठं सहाम्बं

प्रपश्यन्ति योगीन्द्रमुख्या हराजाः ॥

अहं लोकगुप्त्यर्थमीशानि देहं

सृजाम्यद्य कामं निगृह्णामि चान्ते ।

शिवेऽव्यक्तरूपं सुराद्यैर्दुरापं

न जानीयुरेतत्कथं(थां) पामरा माम् ।

श्रृणु श्रवणभूषणं निगमपारसारं स्फुटं

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सुगोप्यमपि वर्तते हृदि सुगोप्यमेतत्त्वया ॥

अशाम्भववरेऽर्पितो न भवति प्ररूढस्तरु -

र्यथैव मरुभूमिगःशिवरहस्यमेतत्तथा ।

सुशाम्भवसरोवरप्रततरक्तफुल्लाब्जिनी ।

विकासनदिवाकरः शिवजनैकतोषप्रदः ।

हृदन्तरतमोगणोन्मथितपापमेघानिलो

विशोषयतु दुष्पथप्रभवकामपङ्कं सदा ।

भजन्तु सुधियः सदा श्रवणराशिसन्मङ्गलं

न हीनजनमानसाः श्रवणमेतदेव स्फुटम् ।

ध्रुवं भवति शैलजे निगमसारभूतं मधु

शिवार्चकजनप्रिये मधुलिहस्त एव प्रिये ॥

प्रकृष्टरसभावुका भव भवाब्धिसंशोषकाः ।

*इति श्रीशिवरहस्ये प्रथमांशे स्कन्ददर्शनं नामाष्टमोऽध्यायः*

## ॥ नवमोऽध्यायः ॥

**सूत उवाच -**

एवमभ्यागतान्सभ्यान् सदसस्पतिशासनात्

स्कन्दास्यविमलोदारनिर्गच्छन्त्यःशिवाश्रयाः ।

कथाः कापथदुःश्राव्या नारदोऽथ सुरान्ययौ -।

चक्षुःश्रवःकन्यकाश्च श्रवणार्थं दिवस्पतीन् ।

ब्रह्मेन्द्रविष्णुलोकेशान् तदुदन्तकथा भुवि ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

विष्णवे ब्रह्मणे चैव दिक्पालेभ्योऽमरेश्वरे ।
तच्चाकथयदीशेभ्यो जैगीषव्यप्रसादजम् ।
महेश्वरस्य देवस्य श्रुत्वा ते सम्भ्रमात्सुराः ।
कथाश्रवणलोलाक्षा नारदेन समागताः ।
विनतानन्दनारूढो लक्ष्मीपतिरतन्द्रितः ॥
धवलाभ्रनिभात्युच्चहंसारूढो विधिस्तदा ।
अभ्यगाद्भारतीनाथो नागारूढः सुरेश्वरः ।
स्वं स्वं वाहनमारुह्य ययुर्देवास्तदा मुदा ।
तारकारिसदः प्राप्ता नानाभरणभूषिताः ।
प्रणम्य ब्रह्मविष्णिवन्द्राः कृताञ्जलिपुटा जगुः ॥

देवा ऊचुः-

स्कन्दानन्दितवन्दारुवृन्दवन्द्यपदाम्बुज ।
शिवभावामराध्यक्ष श्रोतुं तव मुखाच्छुभाः ।
शम्भोः शम्भुज सर्वस्वाः कथाः शिवरहस्यगाः ।
श्रोतुं प्रवृत्ता मुनिभिर्जैगीषव्येण सादराः ।
तस्मात्प्रवर्तय शुभाः पापतापनिवारकाः ।
तदा सुरमुनीन्द्राणां वचसाऽऽनन्दनिर्भरः ।
जगाद सम्प्रणम्येशं अम्बां विघ्नाद्रिभेदनम् ॥
ध्यात्वा स्वहृत्पद्मगतं जैगीषव्यमुदैक्षत ।
शैवेन्द्रा अमरेन्द्राश्च प्रोत्फुल्लनयनास्यकाः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

उवाच प्रसभं सभ्यान्सदसस्पतिपूजकान् ।
भस्मत्रिपुण्ड्रत्रिटिलान् रुद्राक्षाङ्गदकङ्कणान् ।
शिवपादाम्बुजव्यग्रचेतसस्तानभाषत ।

स्कन्द उवाच -

त्वमेव भवभक्तोऽसि जैगीषव्य श्रृणुष्व मे ।
सहैभिर्मुनिभिः सार्धं देवैः शिवरहस्यकम् ।
देव्यै देवेन कथितं पापतापविशोषकम् ।
एवं संवदतां तेषां सिन्दूरारुणगण्डभृत् ।
वारणेन्द्रमहावक्त्रो विघ्नपूगनिवारकः ।
स्कन्दाश्रमं तदा प्राप गणबृन्दनिषेवितः ।
विमानवरमारुह्य कैलासाचलतस्तदा ।
नन्दी भृङ्गी महाकालबाणचण्डीश्वरादयः ।
तुहुण्डहुण्डसानन्दमहानन्दाश्च भैरवः ।
तुन्दः कालाग्निरुद्रश्च ये चान्ये गणपोत्तमाः ।
सोमनन्दिप्रभृतयो गणकोटिवरप्रदाः ।
समागता महेशेन प्रेषिता गणनायकाः ॥
मस्तकान्तजटोद्भासिधृतबालेन्दुशेखराः ।
त्रिपुण्ड्रविलसत्फाला रुद्राक्षाङ्गदकङ्कणाः ।
महाडमरुनादोत्थहुङ्कारितदिशामुखाः ।
तान् दृष्ट्वा सहसोत्तस्थौ मुनि(भि)श्च सुरासुरैः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नत्वा द्विरदवक्त्रं तं दत्वार्घ्यासनमुत्कटम् ।
सम्पूज्य मोदकापूपदूर्वागन्धाक्षतादिभिः ।
तारकादि(रि)र्गणेन्द्रांस्तान् पर्यष्वजत गाढहृत् ।
नन्दीश्वरादीन् सस्नेहं पूजितास्ते महार्हणैः ।
निषेदुः स्कन्दमभितो मुनीन्द्राः सुरपा गणाः ।
पश्यन्तस्ते प्राञ्जलयः षडाननवराननम् ।
ऊचुस्ते नन्दिकेशाद्याः स्कन्दं क्रौञ्चनिषूदनम् ।

नन्दिकेश्वरः

जैगीषव्यस्य तपसा प्रसन्नेन शिवेन हि ।
त्वद्वागमृतनिष्यन्दकथाश्रवणलालसान् ।
अस्मान् सम्प्रेषयामास त्वदन्तिकमुमापतिः ।
उमाङ्कसंस्थेन पुरा त्वयाश्रावि मनोहरम् ।
शैवं शिवायै कथितं रहस्यं पापभेदनम् ।
द्वादशांशयुतं साक्षात् पशुपाशविमुक्तिदम् ।
वद स्मृतिपुराणेषु भारतेष्वागमेष्वपि ।
पशुधर्माश्च मुनिभिः प्रोक्ताः संसारदायकाः ।
पतिधर्मैककथनं विमुक्तिदमुमापतिः ।
वेदवेदाङ्गसारोत्थकथा(:)पापनिकृन्तनीः ।
कथयामास तद्देव्यै रहस्यं श्रुतिसम्मितम् ।
जाबालोपनिषत्सारं साक्षाद्धरमुखोदितम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तदन्तिकप्रदेशेऽपि नैवास्माकमवस्थितिः ।
सप्तप्राकारबाह्ये वै संस्थिता गोपुराग्रतः ।
देव्युत्सङ्गगतेनाद्य त्वया तच्छ्रुतमुत्तमम् ।
तद्वदास्मभ्यमधुना गोप्यं देवेन कीर्तितम् ।
अपर्णायै मुदा तत्र कैलासे शङ्करालये ।
हारेन्द्रस्यानुषङ्गेन फणीन्द्राश्च प्रसादिताः ।
सुरेन्द्राश्च मुनीन्द्राश्च जैगीषव्यतपस्यया ।
त्वयि प्रेमास्पदं शम्भोः शम्भुना प्रेषिता वयम् ।
जैगीषव्यं पुरस्कृत्य वदास्मकं कृपानिधे ।
निधानभूतं सद्रत्नं शिवधर्मैकसादरम् ।
इत्थं नन्दीशवाक्येन चन्द्रोदय इवाम्बुधिः ।
प्रहर्षमतुलं लेभे नगाधीशसुतासुतः ।
वचसाऽऽह्लादयन् सर्वान् गणेन्द्रानमरेश्वरान्
मुनीश्वरान् गजेन्द्रास्यं जैगीषव्यं महामुनिम् ।
उवाच चाग्रजं नत्वा महेशं चाम्बिकामपि ॥
गजाननं तदास्तौषीत् स्तोत्रेणाथ षडाननः ।
कृताञ्जलिपुटो भूत्वा गणेन्द्रसुरभूसुरैः ॥

**स्कन्द उवाच -**

पयोदधिपयोभवद्विकचपुष्करं पुष्करैः
मदान्धकरटित्वचो वसनपुत्रमिन्द्रप्रभम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

त्रिपुण्ड्रतिलकोज्ज्वलं द्विरदवक्त्रकुम्भोज्ज्वलं
महेशजनिमर्चकं प्रणत विघ्नराजं सुराः ॥
सिन्दूरदूर्वार्चितकुम्भमौलिं
गण्डस्थलीलम्बितचामरौघम् ।
कर्णावतंसीकृतपद्मकोशं
नमामि विघ्नाद्रिहरं प्रसन्नम् ॥
करटजमदधारागन्धसन्दोहबन्ध–
द्विजदलिकुलमालं कर्णसंवीततोद्यैः ।
भजत निगमसारं नागयज्ञोपवीतं
पशुपतिवरपुत्रं विघ्नराजं नतोऽस्मि ।
सृणिपरशुकराब्जं नौमि विज्ञानहेतुं
गणपतिमगजान्तः प्रेमधारारसाप्तम् ।
फलकुलगुडमाद्यं मोदकौघप्रियं त्वां
पशुपतिवरपुत्रं नौमि नागेन्द्रवक्त्रम् ।
आखुवाहमजशौरिसुरेशै –
स्सिन्धुरेन्द्रवदनं मुनिवन्द्यम् ।
वेदवृन्दनिवहैः स्तुतमाद्यं
गद्यपद्यवचसा प्रणतोऽस्मि ।

सूत उवाचः–

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

गजास्यमित्थं संस्तुत्य षडास्यस्तुन्दिलान्तरः ।
प्राह तान् प्रमथाधीशान्सुरेशान्भूसुरांस्ततः ।
जैगीषव्यं मुनिश्रेष्ठं विशिष्टं शिवसम्मतम् ।
स्कन्दोऽग्रजस्यानुमतेःशिवयोःप्राह तन्मतम् ।

**स्कन्द उवाच –**

ईशानाम्बुनिधेःसुशीकरगणा ब्रह्मेन्द्रनारायणा –
स्ते शक्त्यादिमरुत्प्रचारचलितास्तत्सूनुजाःसृष्टयः ।
तत्सूनुप्रभवा नृपादय इमे किं तत्कथाभिः फलं
सम्प्राप्नोति विसृष्टयोऽत्र हि महाभूतादिभिस्ता मृषा ।

मिथ्याभूतजगत्प्रचारविहितो धर्मोऽत्र वर्णाश्रमा –
पारावारविचारसारहृदयास्तेषां श्रमः केवलम् ।
किं तच्चर्वितचर्वणेन विदुषां विद्योद्भवो जायते
यं धर्मोत्तममामनन्ति तपसा संवेद्य एकःशिवः ।
जैगीषव्यमुखाश्च भूसुरगणा यूयं गणाः शाङ्करा
विष्णुब्रह्मसुरेश्वरा मुनिगणाःश्रीमद्गणेशाग्रतः ।
वक्ष्ये तच्छिवयोरपारचरितं कैलासमत्यादरा –
दप्राप्यं त्वविदुर्धियां च सुधियां श्रीमन्महेशालयम् ।

*इति श्रीशिवरहस्ये प्रथमांशे स्कन्द शिवगणसंवादो नाम नवमोऽध्यायः ॥*

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ दशमोऽध्यायः ॥

**स्कन्द उवाच –**

शिवपादारविन्दश्रीर्या श्रियं श्रीपतिं विधिम् ।
इन्द्रचन्द्रसुरानन्यानुत्पादयति सा शिवा ।
डुण्डिं च नन्दिकेशं च तथा भृङ्गिरिटिं मुनिम् ।
मार्कण्डेयं दधीचिं च दुर्वासं जामदग्निकम् ।
ओं जय जय मङ्गलतरसुन्दरतम मङ्गलापते
जय जय विश्वविधान संस्थिति(निधान) शिक्षणचण
बन्धुतर सिन्धुवर(सुन्दर)वरकृत्तिवसन मुनि-
वृन्दविनुत नन्दितमखसंहृते, सुरनन्दितगण
पुरमारक, भवशोष(ण) गरलाशन शमन-
भयकम्पितमुनिपोतकशरण, अरुणाधिप, करुणाकर,
जनतार(ण), तरणिस्थित, सुरकारण, मारशोषण,
त्रिगुण, निगमगणपोषणचरण, शरणं भव, शरणं भव,
शरणं भव दयया,–
निगमागमवचनातिग, यमिमानसगगनान्तर,
वयुनस्थितिसुरकारण, भवनाशन
वरहारक, दहनामलनयन, मननातिग वृषवाहनगमन,
भवनाशन, वसिताशक, सुरभूसुरनिकरावन, पितृ-
काननविहृते, दहराकृतिकुहरातिग, वरभूधरशयन,

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

खरशीतजकरसंस्थित मुरभेदनशरधारण
पुरनाशन निगमव्रजतुरगोत्तम,
उरगाधिपकृतशिञ्जनिवरकार्मुक, मृगधृक्,
कुलिशायुधमुखदैवतभटरक्षणचतुर शरणंभव
शरणं भव दयया ॥

दहनानिलतपनामर वर भूसुर जलनायक
शमनाकृतविनते, कलिताखिल चरजङ्गम —
जनतावनजननादिक ललितोत्तम चरित,
भरितानतवरतात जनतापहृते विनतात्मज —
वहनार्चनजनितातुलदयया विकचाम्बुज —
निभलोचन रथसंवहनप्रद विधि—
मौलिजफलकामलशयभूषितभगवन्
पवनानल वलमारणबलशोषण तृणचालन
मपि कृते कृणुते न हि निखिला —
गमशिरसंस्तुतचरित शरणं भव शरणं भव
शरणं भव दयया ॥
क(व)रुणालयमथनोद्भवगरळोत्थितमहसा,(स:)सुरकिन्नर
हरवग्लन(परिपालन) हरिसायक, रभसा, कबली
कृतगरसम्भवनलिनामलशुभकन्धर जलदोपम
भगवन् । मधुमारणनयनामलनलिनार्चितपदपङ्कज,
लुलिताम्बुधिचुलुकीकृतघटसम्भवनुतितोषित,

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यतिमानसवरभूषण फणिकङ्कण भगवन् ।
दुरितापह चलितामल ललितेन्दुकलालवविमलीकृत जगते
शरणं भव शरणं भव शरणं भव दयया ॥

मखसन्मुखहवनाशनमुखतर्पित हरि(वि)भक्षण-
विबुधव्रजनलिनोत्थितमहिमातिगपरिपूजनरहिता-
तुलमन्युकृते मननोत्थितगणगर्जन परितर्जन सुर-
भर्जन विधिनन्दन कृतशिक्षण-परिपूरित दुरितान्तक
गजमारणकरण अगजाधिप भुजगाधिपशयनार्पित विधिमौलिज-
कलितस्त्रज बलभिन्मतभगदैवतनयनाम्बुजनाशकृते शरणं भव शरणं भव
शरणं भव दयया ॥

जटिलालक मृगनायक मदपाटन जनिताम्बर कटिशोभित तटसंस्थित
निगमागमभटघोषित सुरनायक त्रुटिताखिलजगदुद्भवघटखर्पर हरिशर –
(सायक) (बल) कर्षण पुरदाहन भगवन्
पटुताकृतिनिखिलस्थिति कटुकीकृतजलधे
भवदागमजगदुद्भवजलदालयवहन, त्रिपुरान्तक शमितान्धक
शमिताखिलदुःख विभो शरणंभव शरणंभव शरणं भव दयया ॥

पवनाशनमणिकङ्कण गरळाशन मधुसूदन बलनाशन यमुनानुजभवनाशन
सिकताशनतनयामल गणसत्तमगुणबन्धुरहृदयानतमुनिसत्तमविनुत गुण
गर्जितवदनायित शशिधामककृतनेत्रक उडुनायकशिखरामरवरनायक
कुमुदाकरसमुदायज ततलोचन द्विरदानन सुतहर्षदतरुणेन्दुललाम

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मसृणारुणनखजोत्पलकलिकायित सुरजालक मकुटीतट घटिताम्बुजपाद
शरणंभव शरणंभव शरणंभव दयया ॥

अखिलाण्डजशुकतुण्डज घटनोत्थित मधुरायितसुख-
तन्द्रिज रस सारस पद नामजमुनिगीत विनोद ।
कनकाम्बुज जनिताखिलजग (जन) खण्डन यमदण्डन
शशिखण्डनकलितामलशिरसे मृदुमण्डित उरगेश्वरकृत-
कुण्डलविधिखण्डन शिखिडम्बरकृतलोचन वडवानलकृत जिह्वक
शिखिवाहनकृतबोधनश्रुतिमण्डल शिरसे ।
पुरदण्डन नगकोदण्डजहरिशरकर्षणाखण्डल करभञ्जन
मुनिमण्डलकृतरक्षण खण्डपरशो तण्डुनन्दिगण भृङ्गिचण्डिकृतताल
मद्दलज घुङ्घुमध्वनिमड्डुघर्घरित रङ्गनाट्यपर
जह्नुजाविततनीरतीरविलसच्छिवलिङ्ग
शरणं भव शरणं भव शरणं भव दयया ।

इत्यष्टपद्यैःस्वान्तःस्थं तुष्टावाष्टाकृतिं हरम् ।
स्कन्दो नत्वाथ जगतां मातरं स्तोतुमारभत् ।
उदारतरगम्भीरपद्यैर्हृद्यैर्महेश्वरीम् ।
देव (वामाङ्ग) भागस्थां तारकारिःस्वमातरम् ।

स्कन्द उवाच—

नौमि स्तौमि जगत्प्रसादघटनासंस्थानसम्पादितां
लोकालोकनतत्परां भगवतीं मायां महेशाश्रयाम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

विष्णुब्रह्ममरुद्गणेश्वरमहासाम्राज्यदानक्षमा-

मीशाङ्काधिकृतां प्रसादमुखरां कायेन वाचा सदा ॥

इन्दुकुन्दकरिमत्तजबिम्ब-

स्फारधारविजिताखिलवृन्दाम् ।

नीलमेघनलिनामलकान्ति

केसरीन्द्र वरभूधरकूर्माम् ।

वक्रदन्तगमनाधरकेशै-

र्लोचनेन जघनेन कुचाभ्याम् ।

पादपङ्कजरजःपरिभूतां

नागयक्षसुरमानवकन्याम् ।

अम्बामम्भोरुहाक्षीं (सकलसुरकदम्बैकशालिप्रपूर्णां

काशीशेशान्नपूर्णां विधिहरि हर सत्संस्तुतां भर्गकान्ताम् ।

शान्तां शान्तान्तरङ्गां भजदघपटलीव्यालनागान्तकान्तां

कान्तां देवस्य देवीमगवरवरजां नौमि चिन्नित्यसंस्थाम् ॥)

विधिवहगरुदाभैश्चामरैर्वीज्यमानां

शशिमुखनिजभर्तुर्भार्यया छत्रवत्या ।

सितनभसटसिंहस्कन्धसिंहासनस्थां

गजमुखशिखिवाहप्रेमजानन्ददृष्टिम् ॥

रक्तबीजतुरगारिधूम्रज-

चामरारिवरशुम्भनिशुम्भान् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चण्डमुण्डवरभण्डजमुण्डै—
राजिभूमिकमलैरिव देवी ।

कोदण्डाकृष्ट दण्डोच्चलित वरशरासारधारादिभिर्या
तस्ताराम२वीरसंस्तुतपदा सा पातु नःश्रेयसे ॥

सूतः (उवाच)

एवं संस्तुवतस्तस्य स्कन्दस्यामलचेतसः ।
प्रादुरासीद्वृषारूढो भगवान् गोवृषध्वजः ॥
नीलकण्ठस्त्रिणेत्रश्च भोगिभोगविचक्षणः(विभूषणः) ।
कोटिप्रभाकरोद्भासिमयूखावलिभासितः ।
दिशामुखतमःस्तोममौलिसोमनिवारितः(रकः)
चलच्चामरवातोत्थपोतप्रोच्चलिताम्बरः ।
छत्रछायावारितोद्यद्भानुभानमरीचिमान् ।
सोमः सहोमयाभ्यागाद्गणसङ्घसमावृतः ॥
सुरासुर करोन्मुक्तसुमवर्षौघसन्ततिः ।
तद्गन्धबद्धसम्बद्धमरुदामोदमोदितः ।
विकचत्कमलामोदमालया शोभिविग्रहः ।
विकास(विलसन्)मणिमुक्तादिमाला कलितकन्धरः ।
फणामणिकृतानेकमाणिक्यवरकङ्कणः ।
जङ्गमाद्रिप्रतीकाशवृषारूढोऽभ्यगाच्छिवः ।
मुनिकिन्नरगन्धर्वगानधारास्तुतस्तुतिः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

दृष्ट्वा देवं तदोत्तस्थौ स्कन्दःसिंहासनात्ततः ।
मुनीन्द्रैश्च सुरेन्द्रैश्च गणेन्द्रैर्गणपेन च ॥
जैगीषव्येन मुनिना प्रणनाम महेश्वरम् ।
दृष्ट्वा नमन्तं तं स्कन्दं सगणं समुनिं सुरान् ।
द्विरदास्यं मुनीन्द्रं च जैगीषव्यं कृपाम्बुधिः ।
करुणासारया दृष्ट्या चालुलोके सहाम्बया ॥
पुत्रौ गाढं परिष्वज्य मूर्ध्नि चाघ्राय शङ्करः ।
उवाच सर्वदेवानां सन्निधौ स्कन्दमीश्वरः ॥
वत्सानया तव स्तुत्या सन्तुष्टोऽस्मि सहाम्बया ।
धन्यया न्याय्यया स्कन्द त्वं ममातीव वल्लभः ।
त्वया मद्वदनाम्भोजाद्यच्छ्रुतं सारमैश्वरम् ।
शैवं शिवरहस्याख्यं वद(र)मोक्षकथाश्रयम् ।
गणानां च सुराणां च मुनीनां भावितात्मनाम् ।
जैगीषव्यं पुरस्कृत्य मम भक्तं जितेन्द्रियम् ।
मारिष्टं मा च ते विघ्नं मम भूयात्कथारसे ।
यतो विघ्नहरस्तेऽद्य सन्निधौ वर्ततेऽग्रजः ।
इत्युक्त्वाह महादेवीमालोक्य च हसन्हरः ।

## ईश्वर उवाच

नानास्थावरजङ्गमादिजनुभिर्भ्रान्तस्य मानुष्यता
मानुष्ये सति विप्रता श्रुतिगता चाचारता तत्परम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

इष्टापूर्तिविधिक्रियादि शतशो वृत्या परं शाम्भवो ।
लिङ्गालिङ्गनचेतसा स हि भवेन्मुक्तस्त्वलिङ्गःसुखी ॥

श्रुतिगतविधिजाल कर्ममूला-
स्त्रिगुणगतातिसौख्यदुःखशीलाः ।
मनसिजसुखमानसङ्गलीला—
मनन विचार विवर्जनेन बालाः ।
नरकमुखमवाप्य चेन्द्रलोकं
भवभुवनं समवाप्य मर्त्यलोकम् ।
पुनरपि जननेन कर्मशेषै—
र्मतिमपिं घोरतरां समाप्नुवन्ति ॥

किं वेदैरखिलैःपुराणनिचयैरन्योन्यनिन्दापरैः
किं वा भारतयुद्धकीर्तनमुमे किं क्षुद्रकर्मादिभिः ॥
यत्रेशानकथाप्रचारविधुरा निःसारभूता कथा
काव्येनापि किमत्र रामकथया दुःखोत्कटायाः फलम् ।

**सूतः (उवाच)**

कृताञ्जलिपुटा देवी प्राह शम्भुं सनातनम्
महेशं जगदाधारमनाधारं महेश्वरम् ।

**देव्युवाच -**

त्वत्कृपापात्रभूतानां नाऽशुभं विद्यते हर ।
मत्तःशुश्राव वेदार्थं सारं शैवरहस्यकम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्कन्दोऽयं स्कन्दितारातिः विनीतो वीतमत्सरः ।
रहस्यं यत्त्वया प्रोक्तं मुनीन् श्रावयतु प्रभो ।
सुरभूसुरसङ्घेषु गणेन्द्रेषु महेश्वर ।
प्रसादः क्रियतामद्य श्रवणाय मुनिर्धृतः ।
जैगीषव्योऽपि मतिमान् तव भक्तस्त्वनन्यधीः ।
तदा देव्या वचः श्रुत्वा करपङ्कजमुत्तमम् ।
निदधौ स्कन्दशिरसि जैगीषव्यस्य शङ्करः ॥
शङ्करश्रीकरस्पर्शाज्जैगीषव्यकुमारकौ ।
नेमतुः शिवपादाब्जं प्रोत्फुल्लहृदयाननौ ॥
स्कन्दः शिवपदाब्जं तत्कराभ्यां संस्पृशञ्जगौ ।
अयम्मे हस्तमन्त्रेण स्वनेत्रकमलस्त्रवैः ।
अभ्यषिञ्चन्मुदा भक्त्या नान्यत् किञ्चिदमन्यत ।
स्कन्दं प्राह महादेवो जैगीषव्येक्षणस्तदा ॥

**ईश्वर उवाच–**

शिवे किलैष तोषकृन्मुनीश्वरेषु यत्प्रियो
विशेषतः कृपाझरीभरीकुलेन लोकितः ।

कलाकुलेन तर्पितो यथैणवाललाञ्छन-
स्तथैष जैगिषव्यकः कटाक्षतो भवेन्मम ।
प्रसाद्य सर्वानमरान्मुनीन्द्रान्
(गणेश्वरान्) स्कन्दं मुनिं चापि महेश्वरस्तदा ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

जगाम गौर्या जगतां विधाता

संस्तूयमानो मुनिदेवसङ्घैः ॥

इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्यस्कन्द प्रसादो नाम दशमोऽध्यायः ॥

## ॥ एकादशोऽध्यायः ॥

सूत उवाच

शिवदर्शनजानन्दसन्दोहानन्दकन्दलः ।

प्राह शूरारिरित्थं.तं मुनिमालोक्य शाङ्करम् ॥

स्कन्द उवाच

जैगीषव्य श्रृणुष्वाद्य रहस्याख्यानमुत्तमम् ।

शि(शै)वे रहस्ये देवेशे(न) देव्यै कथि कथानकम् ॥

तद्वक्ष्यामि समासेन श्रृणु त्वं मुनिभिः सह ।

गणेश्वरैः सुरैश्चैव तत्रादौ कथयाम्यहम् ॥

नमस्कृत्वाप्रमेयाय महादेवाय शम्भवे ।

देवीं गजाननं देवं शैवाचार्यानकल्मषान् ॥

माहेशाम्शः प्रथमतो नाम्नासौ मुनिसत्तम ।

जैगीषव्य प्रसादं ते महेशस्य समागमः ।

गणानां देवसङ्घानां मुनीनां च समागमः ।

मया प्रसादितो देवः स्तोत्रवर्येण सत्तम ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कैलासवर्णनं चैव विचित्रं श्रीमहेशितुः ।
देव्या महेशसंवादः कौतुकेन नगोत्तमे ।
चरित्रं शिवयोस्तत्र विचित्रं भूधरोत्तमे ।
कैलासेश्वरपूजा च महेशेन प्रकल्पनम् ।
द्वारप्रकाररचना गणानां स्थानकल्पनम् ।
मम देव्याश्च विप्रेन्द्र गणेशस्य महात्मनः ।
सहस्रलिङ्गाध्यायं च कैलासस्य तपःक्रिया ।
तत्प्रसादेन चेशेन तन्मौलौ वसतिस्तथा ।
कैलासस्याभिषेकश्च शम्भुना कल्पितो नगे ।
जिज्ञासा चैव देवानां देव्याः प्रादुर्भवात्सुराः ।
ज्ञानार्थकथनं चैव ह्यात्मलिङ्गस्य पूजनम् ।
माहेशेऽस्मिन् महेशेन कथाः प्रोक्ताः शिवेन हि ।
दिक्सङ्ख्यया मुनिश्रेष्ठ कथितोऽयं सहस्रतः ।
द्वितीयांशो भवो नाम्ना तस्मिन् प्रोक्तं हरेण हि ।
देव्याश्चैव तपश्चर्या मणिद्वीपागमस्तथा ॥
कल्पवाटीरम्यनीपवनद्वीपोपवर्णनम् ।
चिन्तामणिमहासौधवर्णनं श्रीपुरस्य च ।
तस्मात्कैलासगमनं कामेशस्य वपुर्धरः ।
कामेशया च देव्या च तत्र नित्यमवस्थितिः ।
हिमाचलागमश्चैव देव्यास्तत्र गतिर्मुने ।
दुर्वाससो महिम्नश्च कथनं तत्तपःक्रिया ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

द्वितीये भवसंज्ञे च कथितं शङ्करेण हि ।
सहस्रत्रितयेनैव श्लोकसार्धेन शङ्कर ।
हरस्तृतीयो देवेन कथितोऽम्शो मुनीश्वराः ।
तस्मिन् मुनिप्रार्थनया व्यासेन परिकीर्तनम् ।
गायत्र्याश्च तपश्चर्या देव्यागमनमुत्तमम् ।
गणानां प्रेषणं चैव तीर्थेशमहिमा ततः ।
श्रीशैलमहिमा चापि मानसार्चनकल्पनम् ।
जनकस्य च संवादो यांज्यवल्क्येन शाङ्कर ।
पद्मावत्या रत्ननिधेः संवादः परमाद्भुतः ।
तस्योत्तरार्धे चांशस्य पूजा रत्ननिधेस्तथा ।
शिवस्य देवदेवस्य महादेवस्य शूलिनः ।
यमलोकस्य वृत्तान्तदर्शनं शिवयोस्तथा ।
संवादो भस्मरुद्राक्षधारणे महिमापि च ॥
गङ्गाया नर्मदायाश्च वरप्राप्त्युपवर्णनम् ।
माहेश्वरव्रतस्यैव वर्णनं श्रीमहेशितुः ।
शैवार्चनादिकथनं शिवडुण्डिचरित्रकम् ।
त्रयस्त्रिंशत्सहस्रोऽत्र सङ्ख्यया प्रोक्त एव हि ।
चतुर्थः शिवसंज्ञोऽपि अंशः साक्षाच्छिवोदितः ।
बृहज्जाबालधर्मादिकथनं दशकस्य च ।
भस्मरुद्राक्षमहिमा शिवलिङ्गार्चनस्य च ।
महिमा शिवभक्तानां शैवानां भोजनेऽपि च ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शिवक्षेत्रनिवासस्य कथनं बिल्वपूजनम् ।
पूजाप्रभावकथनं तस्मिन्नंशे प्रकीर्तितम् ।
चतुःसहस्रतः सङ्ख्या देवदेवोदितं शुभम् ।
भर्गो नाम्ना पञ्चमांशः कथितोऽत्र शिवेन हि ।
ज्योतिर्लिङ्गद्वादशानां (द्वादशक) महिमा तत्र कीर्तितः ॥
वामदेवोपदेशश्च श्रुतिसिद्धान्तकीर्तनम् ।
गङ्गासागरमाहात्म्यं प्रभासे पुरुषस्य च ।
हरिद्वारप्रभावश्च बिल्वमूलार्चनस्य च ।
सहस्रनामकथनं देवदेवस्य शूलिनः ।
महिमा देवदेवेन कथितोऽस्ति विशेषतः ।
शिवायै षट्सहस्रोऽत्र कथितो मुनिसत्तम
शङ्करांशस्ततःषष्ठो दिक्सङ्ख्याक्रमसङ्ख्यया ।
कथितः श्रीमहेशेन तस्मिन्रुद्रोपवर्णनम् ।
शिवलिङ्गार्चनस्यापि भस्मरुद्राक्षधारिणाम् ।
महिमा शाम्भवानां च कथितो विस्तरेण हि ।
उग्रो नाम्ना सप्तमोऽत्र कथितः शङ्करेण हि ।
देवस्य देव्या संवादः नामसाहस्रकीर्तनम् ।
अविमुक्तप्रशंसा च शतर्चनतपःक्रिया ।
नाम्नामष्टोत्तराख्यानं महिम्न(माहात्म्य)मथ वै हरेः ।
पुष्पदन्तमहिम्नाख्यकथनं तत्र सप्तमे ॥
काटकोटरजाख्यानं क्षेत्राणां महिमा तथा ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्रीशैलस्यारुणाद्रेश्च तथा वृद्धाचलस्य च ।
श्रीमद्दक्षिणकैलासमाहात्म्यमपि विस्तरात् ।
पुण्डरीकपुरस्यापि काञ्च्याः श्रीमहिमाऽद्भुतः ।
कुम्भघोणप्रशंसा च तथा मध्यार्जुनस्य च ।
चतुर्दशसहस्रेण कथितोऽत्र शिवेन हि ।
भीमोऽष्टमो महांशोऽत्र कथितो विस्तरेण हि ।
दिङ्नागसङ्ख्यया चैव सहस्रेण मुनीश्वर ।
पाताललोकलिङ्गानां महिमाकथनं मुने ।
श्रीहारकेशमहिमा शेषस्यात्र तपःक्रिया ।
प्रसादश्च महेशेन तस्य भूभारधारणे ।
सदाशिवोऽम्शो नवमस्तस्मिन् शम्भोःकथानकम्
शिवेनोक्तं महादेव्यै नामसाहस्रमुत्तमम् ।
कलौ शैवसमाचारप्रमाणेन विमुक्तिदम् ।
महाशाम्भवधर्माणां कीर्तनं परिकीर्तनम् ।
षड्वक्त्रसङ्ख्यया मेऽद्य सहस्रेणैव कीर्तनम् ।
ईश्वराम्शोऽत्र दशमो दशधर्मानुकीर्तनम् ।
बिल्वार्चनं रुद्रजपःपञ्चाक्षरमहोदयः ।
शिवलिङ्गार्चनस्यापि भस्मरुद्राक्षकीर्तनम् ।
शाम्भवानां शिवक्षेत्रे शैवभक्तार्चनं तथा ।
शिवनाम्नः स्मृतेश्चापि दशके(मे)महिमा तु यः ।
तस्मिन् प्रकीर्तितो विप्र शङ्करस्याख्यसङ्ख्यया ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

एकादशो महादेवः प्रोक्तोऽम्शः शम्भुना तदा ।
मन्त्रेत्रक्रमसङ्ख्यातः शिवपूजाक्रमात्मकः ।
आभिषेचनिकानां च फलं पुष्पेषु कीर्तनम् ।
भक्तीनां दशकानां च कीर्तनं पूजने तथा ।
मुनिसङ्ख्याग्रन्थतश्च ईशोनाम्नात्र द्वादश ।
शिवनाम्नां सहस्रस्य कीर्तनं तत्र कीर्तितम् ।
प्रसादःशङ्करस्यापि ममैवानुग्रहात्मकः ।
शिवरत्नाकरकथा—माहात्म्यं मुनितोषणम् ।
एतदध्यायसाहस्रैः कीर्तितं श्रीशिवेन हि ।
देव्यै देवेन कथितं रहस्यं शिवसम्मतम् ।
यथा शिवसमो देवो नास्ति लोकत्रयेष्वपि(येऽपि च)
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।
शैवसारमहारत्नकोशोऽयं मुनिसत्तम ।
पुण्योऽयं पावनश्चायं भक्तिसारकथाश्रयः ।
संसारायासधर्माणां कथनेन विवर्जितः ॥
वर्णाश्रमश्रमकथा(विचारादि)कथाश्रमविवर्जितः ।
अत्याश्रमोक्तधर्माणामाकरोऽयं महामुने ।
नानाकथासुपा(श्रयाः) शैवाः परमानन्दनिर्भराः ।
देव्यै देवेन कथिताः शतसाहस्रतोऽधिकाः ।
भक्तैः श्राव्योऽयमतुलः इतिहासवरोत्तमः ।
शैवसारकथारत्नसर्वस्वोऽयं मुनीश्वराः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्कन्दे गजानने गौर्यां यथा प्रीतिर्महेशितुः ।
तथा शिवरहस्येऽपि गोप्याद्गोप्यमिदं शुभम् ।
न देवतैव(दैवतेषु) वक्तव्यमादौ तेभ्यस्त्वया मुने ।
शप मत्पदयोर्विप्र नोचेन्मूर्धाद्य ते पतेत् ॥
वेदान्तसारसर्वस्वं शिवभक्तिप्रकाशनम् ।
देयं भक्ताय विप्राय पुत्रायात्यन्तरागिणे ।
वक्तव्यमनहङ्कारचित्तायात्मगुणाय च ।
शैवाय शम्भोरुत्कर्षभक्तियुक्ताय ते मुने ।
संवत्सरोषिताय त्वं भक्तायान्तेनिवासिने ।
त्रिणेत्रचिन्तायात्राय नान्यस्मै सत्यमुच्यते ।

**स्कन्द उवाच**

जगाद जगतां गुरुस्त्रिजगतां जनित्रीं मुदा
जगत्त्रितयजन्तुहृत्त्रिविधतापदुःखापहम् ।
जडाजडगतस्थितिप्रलयभावभावं भवं
विशोषयदिदं मुहुः शिवरहस्यरत्नांशुमान् ॥
तदेव भवतां वदे भवदवाग्निसंशोषकं
विधुन्तुदमुखोत्थितप्रकटसोमधामप्रभम् ।
विकासितदिशामुखप्रथितपाण्डिमानोपमं
सुधामपि बुधाःपरं हवनवक्त्रहव्याशनाः ।
विधूय सुरलोकगाः परिपठन्ति शम्भोः कथा-
मनाथजननाथ ते प्रमथनाथनाथोऽस्म्यहम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

गिरीन्द्रवरकन्यकाहृदयनाथ पादाम्बुजं
मनोरथपथातिगं प्रथय भक्तिभावं त्वयि ।
क्षमारथरथाङ्गकः स्फुटसुपाणिबाणासनो
हिरण्यनगकार्मुकः सकलविश्वनाथाधुना ।
स एव सुखसम्पदां निधिरपारपुण्यास्पद ।
स एव सुकृती सदा यजति वेदमध्येति च ॥
स दाननिचयार्जितप्रभवधर्मसाराधिक
स उत्तमससागरावसन उर्वरादानकृत् ।
क्षणार्धमधिकादरः शिवरहस्यधर्मश्रवाः
स एव गणनायकः शिवपदाब्जयुग्मार्चकः ॥
सुरासुरचराचरप्रभवनाशरक्षाक्रमैः
न वायुतरणाङ्कणप्रभवयुद्धदुःखोद्भवैः ।
श्रमैकरसधूर्गतैर्विविधवर्णधर्माश्रमैः
कथाभिरिह नश्वरं न भवति श्रुतीशेखरम् ।
तुषाद्रिरभि(परि)खण्डने किमिह लभ्यते तण्डुलः
तथा शिवकथां विना न हि शमाय जन्तोर्मनः ।
शैवानन्दरहस्यसागरमहाद्वीपोपमा द्वादश
तेऽम्शाः शाश्वतशङ्करेण विहिता नामानि तेषां वदे ।
माहेशः प्रथमोभवो हरशिवौ भर्गस्तथा शङ्करः
भर्गः शङ्करउग्रोभीमसदाशिवेश्वरमहादेवेशसंज्ञा क्रमात्
ग्रन्थैः पद्यमहाघमौलिभिदुरैर्वेदान्तसारातिगैः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शब्दैः सुन्दरवाग्विलासमधुरैरध्यायबृन्दैःशिवः ।
साहस्रैश्च शतैः सहस्र किरणाकारैस्तथा शङ्कर-
दिग्लोकामरब्रह्मवेदक्रतुभिर्दिङ्नागतःसङ्ख्यया ।
मद्वक्त्रामलनीलनीरजसमं नेत्रक्रमं शङ्कर-
स्यांस्याक्षिक्रमशो मुनिक्रममयो देव्यै शिवेनाकथि ॥

*इति श्रीशिवरहस्ये प्रथमांशे स्कन्दजैगीषव्यसंवादे द्वादशांश कथनं नाम एकादशोऽध्यायः ॥*

## ॥ द्वादशोऽध्यायः ॥

**सूतः उवाच**

जैगीषव्याय यत्प्रोक्तं स्कन्देनामिततेजसा ।
कैलासापारसौधानां गोपुराणां नगस्य च ॥
प्रमाणं लिङ्गसङ्ख्यानामालयानां च निर्मितम् ।
शिवेन निर्मितं साक्षान्मनसैवातुलप्रभम् ।

**स्कन्द उवाच**

जैगीषव्य श्रृणुष्वायं(श्रृणुष्वेदं)कैलासस्थानमुत्तमम्
श्रृणुष्व शैलं शिखरैः शम्भोरावासमुत्तमम् ।
सर्वगस्यापि देवस्य महादेवस्य शूलिनः ।
महाकैलासमित्युक्तं शिवतत्वार्थवेदिभिः ।
ईशानगणमुख्यस्य कैलासं दक्षिणाश्रयम् ।
अयं मुनेऽमरेन्द्राणां निवासो मेरुरुन्नतः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

प्रविष्टःषोडशाधस्ताद् द्वात्रिंशन्मूर्ध्नि विश्रुतः ।
वृषः स्तम्भमयो भाति महाकैलाससन्निधौ ।
कैलासादपि पूर्वस्यां पञ्चाशच्च सहस्रकैः ।
योजनैःप्राक्स्थितो मेरुर्नानासुरगणाश्रयः ।
ज्वलज्ज्वलनसङ्काशः कनकोत्तमपर्वतः ।

सहस्रयोजनोत्सेधं विद्धि मेरुं सुरालयम् ।
षष्ठिः कथितो योगिन्नूर्ध्वायामैकमूलतः ।
लक्षयोजनमानेन कैलासो धरणीधरः ।
कुलाचलाः सप्तशतं प्राकारपरिघास्तथा ॥
प्राकारस्यान्तराळश्च सप्तद्वीपाः ससागराः ।
सप्ताब्धयःसुधाम्भोधिकल्लोलामलवीजिताः ॥
कोटियोजनमानेन कैलासो भूधरो महान् ।
राजतो राजतेऽत्यन्तं पञ्चाशल्लक्षमानतः ।
सप्तपाताल मूलान्तः सप्तलोकान्त उच्छ्रयः ।
महाराजतभूभागश्चन्द्रकोटिसमप्रभः ॥
नाग्निर्नविधुर्नोसूर्यस्तत्तेजःसदृशो भुवि ।
चतुर्दशमहालोकानुच्छ्रायशिखरैरयम् ॥
मध्ये सुधासागरस्य फेनमण्डोपमःस्थितः ।
न हरो न हरिर्धाता महेन्द्रश्चैव देवताः ॥
न सुपर्णोरगा यक्षा गन्धर्वाश्च दितेःसुताः ।
न वीक्षितुं शक्नुवन्ति किम्पुनर्गन्तुमञ्जसा ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तत्प्रभाभिहता लोका हराजहरिणां द्विजाः ।
तत्तेजसा प्रतिहताः सूर्येन्दुपवनानलाः ॥
सुधासागरकल्लोलैः कैलासस्पर्शवायवः ।
पुनन्ति लोकानखिलान् विष्णुब्रह्महरामरान् ॥
सुरासुराणां गमनं न तत्र मनसापि हि ।
न वेदवचनैःशक्यो महाकैलासपर्वतः ॥
तल्लेशलेशमहिमां कःशक्तो वक्तुमप्यणु ।
सहस्रवदनः शेषः सहस्राक्षोऽपि नेक्षते ॥

किम्पुनर्नानताः क्षुद्रा वराकास्ते सुरासुराः ।
शतं कुलाचला मुख्या प्रकारा इव संस्थिताः ।
महद्भिरुच्छ्रितैःशृङ्गैःकेचिद्गोपुरवत्स्थिताः ।
तदन्तरान्तरालेषु परिघाकृतयोऽब्धयः ।
ततोऽपि सप्त प्राकारं शम्भोरन्तर्गृहं परम् ।
प्राकारभूतास्ते शैलास्ताञ्छृणुष्व द्विजोत्तमाः ।
कुमुदःपारियात्रश्च मैनाकः पूर्वदिग्गताः ।
दर्दरो मलयो विन्ध्यः पश्चिमे योगिपुङ्गव ।
उदयास्ताचलौ मुञ्ज उत्तरस्यां दिशि स्थिताः ।
नीलो दक्षिणकैलासो हिमवान् दक्षिणे स्थितः ।
विगाह्यावहिताः सर्वे चाब्धिभिः सर्वतो दिशम् ।
द्वीपाब्धयस्ते परिघाः सप्त सप्तैव पर्वताः ।
तदन्तरान्तरालेषु विहरन्ति दिवौकसः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

गन्धर्वाप्सरसःसर्वा(सिद्धा) नागयक्षाः सुपर्णकाः ।
किन्नराः पुरुषाः पुण्या विद्याधरसचारणाः ।
मुनयो गणसङ्घाश्च नानाभूमैकभूभयः ।
ततोऽपि विष्णुब्रह्माद्या-ईशाना रुद्रमूर्तयः ।
विहरन्ति पयोऽम्भोधिप्राकारवरमाश्रिताः ।
स्वादूदकाब्धितीरे च ततोऽपि प्रमथाधिपाः ।
ततोऽपि रत्नप्राकारो दशसाहस्रयोजनः ।
तद्रत्नकान्ति-धाराभिर्मण्डितं भुवनत्रयम् ।
मत्तकोकिलनेत्राभस्तत्रास्ते रत्नपर्वतः ।
शतयोजनकोच्छ्रायः पद्मरागनगोत्तमः ।
मयूखमालाविततत्तन्मयूखतिरस्कृतः ।
चन्द्रकान्तमणिप्रोद्यत्प्राकारोऽस्ति तदन्तरा ।
पञ्चाशतं सहस्रं च योजनायामतो द्विज ।
सोमाच्छशतधाराभिर्निर्यत्पीयूषधारवान् ।
तत्कान्तिसारधाराभी रञ्जितास्तत्रभूमयः ।
हिमसारमहातारधाराव्यापिनगोत्तमः ।
दशसाहस्रमानेन तत्रास्ते हीरको ह्यगः ।
इन्द्रनीलामलमणिप्राकारोऽस्ति तदन्तरे ।
पञ्चाशत्सोऽपि मानेन नीलनीलोत्पलद्युतिः ।
तन्नैल्यगर्भसौन्दर्यधाराधारैकभूमयः ।
तत्रास्ति पर्वतवर इन्द्रनीलशिलोच्चयः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नीलनीरदसंश्लिष्ट विद्युल्लेखान्वितच्छविः ।
दशसाहस्रविस्तारः परिणाहेऽपि तादृशः ।
हरिन्मणीन्द्रप्रवरः प्राकारोऽस्ति तदन्तरा ।
तन्मणीन्द्रप्रभाभासिहरिता एव भूमयः ।
प्रवालपर्वतस्तत्र विंशत्साहस्रमुन्नतः ।
बिम्बामललसत्कान्तिः कान्तो भूधरनायकः ।
तदन्तरेऽपि प्राकारो गोमेदमणिकल्पितः ।
त्रिंशत्साहस्रमानेन मधुपिङ्गलसुन्दरः ।
तत्रोच्चपर्वतो विप्र कुरुविन्दमणिप्रभः ।
पक्षसङ्ख्यासहस्रेण शिखरश्चापि तादृशः ।
तस्यान्तरेऽपि प्राकारः पुष्परागशिलाञ्चितः ।
चत्वारिंशत्सहस्राणां योजनोन्नतमानतः ।
तस्यामलच्छविगणैः सदृशामलभूमयः ।
तत्रापि भूधरश्रेष्ठो मुक्तामणिशतैश्चितः ।
उन्मत्ताखुभुजोत्तुङ्गलोचनामलसच्छविः ।
तदन्तरा त्विषाकारविंशत्साहस्रमानतः ।
तत्त्विषभि(प्रभाभि)स्ततः सर्वपीतीभूतदिगन्तरः ।
वैडूर्यात्मकसत्वोत्थधारारसविजृम्भिताः ।
भूमयस्तत्र शोभन्ते विस्मयानां स्मयप्रदः ॥

तत्रास्ति पर्वतवरो नवरत्न(ना)युतच्छविः ।
क्वचिन्मरकतस्वच्छलहरीहरिताकृतिः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

क्वचिद्विद्रुमसङ्काशः सन्ध्याघननिभः क्वचित् ।
क्वचिद्धीरकजात्यच्छफलामलसमच्छविः ।
क्वचिद्वैडूर्यसूत्रोत्थभाभासितदिगन्तरः ।
उन्मत्त कोकिलाक्ष्याभकुरुविन्दनिभःक्वचित् ।
पुष्पराग सरागोद्यद्रागरक्तोऽरुणः क्वचित् ।
तृणग्राहिमहानीलनीलिम्ना च नभोपमः ।
क्वचिद्गोमेदकस्फारमधुधारासमच्छविः ।
मुक्ताकान्तितिरस्कारिश्लक्ष्णनैर्मल्यभायुतः ।
स्वच्छाच्छस्फटिकोपान्तबिम्बिताखिलदिक्तटः ।
नानारागमयूखौघ इन्द्रचापनिभः क्वचित् ।
तत्रास्ति मण्टपवरं नानाचित्रविचित्रितम् ।
पद्मरागमणिस्तम्भस्तम्भपीठमनोहरम् ।
सिह्मशार्दूलशरभगजहंसशुकाकृति ।
व्यालिशुण्डानलिन्यादिचित्रचित्रितविस्मयम् ।
एकैकरत्नसङ्क्लृप्तनीलोच्छ्रायैकभासुरम् ।
पङ्क्तिशः स्तम्भसाहस्रैर्नवरत्नपरिष्कृतैः ।
आपादपीठजश्लक्ष्णगोपानसिसुभित्तिकम् ।
स्वच्छादर्शतलप्रायभूमिभागैकरञ्जितः ।
ततः स्तम्भप्रभाज्योत्स्नाप्रभाकरशतप्रभम् ।
न सूर्यचन्द्रौ भासेते वह्निनक्षत्रविद्युतः ।
तिरस्कृताः प्रभास्तत्र न रात्रिर्न दिवा क्वनु(क्वचित्) ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

एवं लक्षस्तम्भयुता मण्टपास्तत्र कल्पिताः ।
पर्यन्तगोपुरोत्तुङ्गरत्नसौधायुतैर्वृतः ।
सहस्रलक्षफलकैस्तम्भकुम्भैर्युतो मुने ।
गोपुराणां प्रमाणं तु मनसापि न शक्यते
नानारुद्रावतारादिमणिकल्पितविग्रहः ।

मूर्तयो देवदेवस्य देव्या वाहनसंयुताः ।
स्कन्देहेरम्बनन्दीनां सप्तलोकान्तमुच्छ्रिताः ।
गोपुराणां तलैर्दिव्यैर्विस्तारायामलक्षकम् ।
लिङ्गोद्भवस्ततः पार्श्वे वृषवाहस्ततःपरम् ।
सिन्धुरत्वक्परीवीतः क्वचित्साम्बः सपुत्रकः ।
स्कन्दहेरम्बसहितः क्वचिद्गणगणैर्वृतः ।
उमार्धविग्रहश्चापि नृत्ताटोपयुतः क्वचित् ।
वामाङ्गदक्षिणाङ्गोद्यज्जनार्दनविधिः क्वचित् ।
देवीपरिणयाकारः क्वचिद्भिक्षाटनाकृतिः ।
शूलासक्तकरश्चापि मृगपाणिः पुराभिहा ।
अन्धकासुरसंहारो दक्षिणामूर्तिरूपधृक् ।
मुनीनां ज्ञानदःसिद्धश्चिन्मुद्रापरिचिह्नितः ।
तत्पूरुष(षे) वामदेवाद्या ईशानाघोरसंज्ञकाः ॥
बालेन्दुमुकुटाः सर्वे कपर्दवरशोभिताः ।
रत्नाभरणभूषाढ्या मूर्तयः शङ्करस्य हि ।
दिक्पालपालिकाभिश्च तत्तद्रागमणिप्रभाः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कल्पिताः परमेशेन शिवलीलाविचित्रिताः ।
पर्यन्तस्फटिकाभाश्च वृषा लीला(नील) विलोचनाः ।
महाश्रृङ्गैकमकुटघण्टामणिविभूषिताः ।
गोपुरोर्ध्वगताः सर्वे महाहीरकश्रृङ्गकाः ।
प्राकारराजद्वृषभा महार्हमणिकल्पिताः ।
तलानां कोटिभिश्चापि गोपुराणां प्रकल्पनैः ।
गोपुराग्रमहारत्नकलशोद्यत्सुतारकैः ।
दोधूयमानोच्चलितसमीरणपताककाः ।
तत्र गर्भगृहं शम्भोर्नवरत्नान्वितोज्ज्वलम् ।
तत्रास्ति मणिपीठोद्यच्चन्द्रस्फटिकसम्भवम् ।
महालिङ्गं महाकारं रत्ननागफणान्वितम् ।
महारत्नवने जातफुल्लमालाविभूषितम् ।
सुवर्णखचितानेकबिल्वचम्पकपूजितम् ।
शम्भुना च महादेव्या लोकानुग्रहकाम्यया ।
समर्चितं त्रिकालेषु प्रदोषेषु विशेषतः ।
तत्रस्थरत्ननिर्यातकान्तिभिर्दीपितं तदा ।
तत्रातोद्यानि कुर्वन्ति गणाः शम्भोर्महात्मनः ।
काहलीमुरजापारमड्डुडिण्डिमजर्झराः ।
शङ्खमर्दलभेर्यश्च निःसाणपटहानकाः ।
गोमुखाः स्वस्तिपाताला वेणुवीणानि(वि)नादिताः ।
रुद्रकन्यासहस्राणि वाद्यं कुर्वन्ति तत्र हि ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

हावभावमनोज्ञानि पेशलालापवन्ति च .
यौवनोन्मादधाराणि रणिताङ्घ्रिजनूपुरैः ।
क्वणद्रत्नजटाटङ्ककपोलामलसच्छवि ।
धूपामोदैकबहलगन्धगन्धायिता दिशः ।
नन्दिप्रोत्सारितगणास्तत्रास्ते शङ्करोऽम्बया ।
पूजितं तं महालिङ्गं पश्यन् रत्नैः सुपूजितम् ।
रुद्रकन्याकराब्जोत्थनखक्वणनघट्टितम् ।
तन्त्रीमुखोत्थगन्धर्वगानं श्रृण्वन् सदाम्बया ।
शिव शिव शिव शम्भो चन्द्रमौलेऽमलात्मन्
हर हर गुरुभारं साम्ब शम्भो दयस्व ।
वितर परममुक्तिं संसृतिर्मा कदाचिद्
भवतु भव भवाब्धेस्तारकं त्वां प्रपन्नः ॥
एवं शङ्करनामसारसुधया प्लावयन् गणाञ्छङ्करः
पश्येशि प्रसभं शिवावदनजाम्भोजभ्रमत्षट्पदः ।

**ईश्वरः**

कैलासेश्वरलिङ्गमेतदमलं दृष्टं सकृत्पूजितं
मामप्याशु सुधार्द्रसारहृदयं कर्तुं प्रवृत्तं शिवे ।
इत्यम्बावदनं निरीक्ष्य भगवान् प्रोवाच साक्षाच्छिवः
तल्लिङ्गालयदर्शनं च सुकरं पुण्यैरगण्यैरपि ॥
नो पश्यन्ति सुरासुराः प्रमथपाः विष्णुर्विधिर्नेश्वरः
पश्यत्येव महेश्वरो गिरिजया स्वं लिङ्गमत्यादरात् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

भोगीभोगफणामणिप्रविलसल्लिङ्गैकमौलीलस
च्चन्द्रासारकरप्रचारजनितानङ्गप्रभावोज्झितम् ॥

*इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णनं नाम*
*द्वादशोऽध्यायः ॥*

## ॥ त्रयोदशोऽध्यायः ॥

सूत उवाच –

कैलासेश्वरलिङ्गस्य महादेवः सनातनः
वरिवस्यां ततश्चक्रे सर्वपूज्योऽपि शङ्करः ।

मुनयः

कथं स सर्वपूज्योऽपि भगवानगजापतिः ।
कैलासेश्वरलिङ्गस्य पूजनं कृतवान्वद ॥

सूत उवाच –

एवमेव पुरा पृष्टो जैगीषव्येन शङ्करः ।
तमाह विनयानम्रं देवसेनापतिः पुरा ॥

स्कन्दः

साधु पृष्टं त्वया विप्र तत्ते वक्ष्यामि साम्प्रतम् ।
देवदेवस्य चरितं शृण्वतामघनाशनम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्कन्दः—

स सर्वगोप्यो धर्मात्मा सर्वाकारतया स्थितः ।
लिङ्गार्चनं हि सर्वेषां विमुक्तिदमिति द्विजाः ।
स्वयं करोति भगवानम्बिकापतिरीश्वरः ।
भुक्तिदं मुक्तिदं चेति सर्वेषां बोधनाय हि ।
संसारसागरे मग्नान्समुद्धर्तुं महेश्वरः ।
कार्यं सुरासुरैश्चैवं विष्णुब्रह्ममरुद्गणैः ॥
देवैर्मुनीन्द्रैर्गणपैर्द्विजैश्चैवाथ शाङ्करैः ।
पूजैव परमं श्रेयः इति दर्शयितुं शिवः ।
स्वयं देव्या महादेवः पूजां लिङ्गे करोति हि ।
तल्लिङ्गपूजनं देव्या शिवेनाकारि तच्छृणु ॥
प्रातः सङ्गवमध्याह्ने(ह्न) प्रदोषेषु मुनीश्वराः ।
नन्दिकेशादिगणपै रुद्राणीभिः सदाशिवः ।
पूजाप्रकल्पनं शम्भोः शम्भुना वरिवस्यया ।
कैलासेश्वलिङ्गस्य पूजनं तच्छृणुष्व मे ।
सप्तसागरपात्रोत्थरसधारादिभिः शिवः ।
गणानीतैश्च सम्भारैर्मनसा कल्पन(ना)क्षमैः ।
पूजया भोगमोक्षौ च सर्वेषां च प्रदर्शितुम् ।
करोत्यपचितिं शम्भुः कैलासेश्वरपूजनम् ।

जैगीषव्यः-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तत्पूजनप्रकारं मे कथय श्रवणे धृतः ।
एभिर्मुनिवरैर्देवैर्गणेन्द्रैश्च विशेषतः ।

स्कन्दः-

श्रृणु त्वं देवदेवेन कैलासेश्वरपूजनम् ।
यथाकृतं महेशेन श्रृणु त्वं मुक्तिदायकम् ।
श्रवणेनापि भक्तानां सर्वेषां मुक्तिदायकम् ।
श्रृणुष्वैकमना विप्र त्वमेभिर्भूसुरैः सुरैः ॥
गणौघैर्नन्दिकेशाद्यैरम्बिकापतिपूजनम् ।
देव्यै देवेन कथितं पृच्छन्त्यै शङ्करः स्वयम्
तद्वक्ष्यामि समासेन श्रृणुत्वं पापनाशनम् ।
स्नात्वा कैलासगङ्गातट मणि कलिते मण्टपे शम्भुरीशो
देव्या नन्दीश मुख्यैर्गणवरसहितो भस्मनोद्धूल्य गात्रम् ।
(स्थित्वा लिङ्गालये स्वे मणिगणखचिते स्वासने सन्निविष्टः
शिष्टः सर्वेष्टदाता समसमसमदो ह्यर्चति प्राज्ञवर्यः ।)
कृत्वा फालतले त्रिपुण्ड्ररचनां बालेन्दुमौलिः स्वयं
रुद्राक्षामलहारकण्ठवलयः पञ्चास्यपञ्चाक्षरः ।
(किञ्चित्किञ्चिदुदञ्चदञ्चलदृगम्भोजावलीमालिकां
वारं वारमिहार्पयत्यगजया जीवज्जयार्थी शिवः ॥)
तत्रेशानवरस्य पञ्चवरदास्यस्यास्य पञ्चानने-
शानस्येश्वरलिङ्गमद्भुततमं तत्पञ्चवक्त्रेश्वरम् ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तद्वक्त्रामलतो झरीभररसैः पञ्चापगा निःसृताः
कैलासाचलनिम्नगातटमहालिङ्गैकसौधालयाः ।
प्राच्यां रत्नाच्छगङ्गा शिवतरगभवा देवगङ्गा किलास्ते
पश्चात्कैलासगङ्गा तदपरभुविगा रत्नसोपानयुक्ता ।
(तत्रावाच्यां च शुद्धा कमलगणगणैःसंयुतात्युग्रगङ्गा
तन्मध्ये ब्रह्मगङ्गा स्फटिकनिभजला पञ्च ताः पञ्चतान्ताः ॥
एता या मणिलिङ्गपञ्चमुखतः सन्निस्सृता मण्टपा —
त्पुण्याःपुण्यतरङ्गशीतलजलाःकूलङ्कषाख्याः पराः ।)
दिव्यापारशिवालयस्थितमहालिङ्गैकसङ्गाकुला-
स्तीरेषु प्रथितोरुमण्टपमणिक्लृप्तैःसुधाब्धिङ्गमाः ॥

नाना बिल्ववनैरपारतरुजैः फुल्लप्रसूनाकुलैः
(पक्षीणां च रवैश्चतीर) वकुलै रक्तच्छदैर्हल्लकैः ।
कोकानां च कुलैःसुकच्छपमहामीनैर्बकानां कुलैः
स्तोकैः पोतकचक्रवाककुररैः पुण्यैश्च सत्सारसैः ॥

स्कन्द उवाच–

तत्तीरामलमण्टपे मणिमहाक्लृप्ते सुसिंह्मसने
देव्या नन्दिगणेश्वरैर्हरवरः पश्यन् सरिन्निर्झरीः ॥
लिङ्गं पञ्चमुखेश्वरं मधुरिमा नेत्राञ्चलैःशङ्करः
तद्वक्त्रामलपङ्कजोद्भवनदीः पुण्यास्तदाहेश्वरः ॥

ईश्वरः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

प्रालेयाचलमिन्दुकुन्दधवलं गोक्षीरफेनप्रभं
भस्माभ्यङ्गमनङ्गदेहदहनज्वालावलीलोचनम् ।
विष्णुब्रह्ममरुद्गणार्चितपदं ऋग्वेदनादोदयं
वन्देऽहं सकलं कलङ्करहितं स्थाणोर्मुखं पश्चिमम् ।
गौरं कुङ्कुमपङ्किलं सुतिलकं व्यापाण्डुगण्डस्थलं
भ्रूविक्षेपकटाक्षवीक्षणलसत्संसक्तकर्णोत्पलम् ।
स्निग्धं बिम्बफलाधरं प्रहसितं नीलालकालङ्कृतं
वन्दे याजुषवेदघोषजनकं वक्त्रं हरस्योत्तरम् ॥
बालार्काग्नितटित्प्रदीप्तकनकप्रस्पर्धितेजोऽरुणं
गम्भीरध्वनिसामवेदजनकं ताम्राधरं सुन्दरम् ।
(अर्धेन्दुद्युतिलोलपिङ्गलजटाभारप्रबद्धोरगं)
वन्दे सिद्धसुरासुरेन्द्रनमितं पूर्वं मुखं शूलिनः ।
बा(का)लाभ्रभ्रमराञ्जनद्युतिनिभं व्यावृत्तपिङ्गेक्षणं
कर्णोद्भासितभोगिमस्तकमणिप्रोद्भिन्नदंष्ट्राङ्कुरम् ।
सर्पप्रोतकपालशुक्तिशकलं व्याकीर्णमाशेखरं
वन्दे दक्षिणमीश्वरस्य वदनं चाथर्वनादोदयम् ॥
व्यक्ताव्यक्तनिरूपितं च परमं शुद्धांशसत्वाधिकं
तस्मादुत्तरतत्वमक्षरमिदं ध्येयं सदा योगिभिः ।
ओङ्कारादिसमस्तमन्त्रजनकं सूक्ष्मातिसूक्ष्मं परं
ध्यायेत्पञ्चममीश्वरस्य वदनं खव्यापितेजोमयम् ।
एतानि पञ्चवदनानि महेश्वरस्य

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ये कीर्तयन्ति मनुजाः सततं प्रभाते ।
गच्छन्ति ते शिवपदं रुचिरैर्विमानैः
क्रीडन्ति शङ्करगणैः सततं शिवाग्रे ॥

इत्युक्त्वा निरगात्ततो सुरसरित्तीरात्तदान्दोलितै–
र्हारैस्तैर्भुजगेश्वरप्रकलितै रत्नाच्छसत्पादुकः ।
कैलासेश्वरधाम सुन्दरमहानन्दैकसारास्पदं
दृष्ट्वा लिङ्गवरं प्रदोषसमये सम्पूज्य पूजाभरैः ।

(श्रीविश्वेश्वर उग्र उग्रतनुजारातिप्रियः शङ्करः
श्रीकण्ठः कलुषाद्रिपक्षदलनस्वाराडसङ्गः शिवः ।)
प्राहोत्फुल्लसुरक्तपङ्कजलसद्वक्त्रो भवनीं हरः
पश्येति प्रसभं मदीयमहिमारम्भैकपूजाभरम् ॥

ईश्वरः–

कुम्भैरम्भोधराच्छछविजितधवलैः पूरितैःक्षीरवार्धौ
पूर्वोद्यच्छशिसन्निभैः स्फटिकजैः कोट्यावधीसङ्ख्यया ।
तत्क्षीरोत्तममण्डसारसुभगैःसिञ्चामि लिङ्गं मम
कैलासेश्वरनामके जनिजरारोगापहे शङ्करि ॥

आनीतं मम तत्पयोऽम्बुधिभवं वीरैर्गणेन्द्रैः शिवे
सद्वृत्तामलधारया जनिमुमे तुष्टः प्रदोषेष्वहम् ।
कष्टानि प्रसभं हरामि सुकृतां राशिं दिशामीक्षणा –
त्सिञ्चन् लिङ्गसुपूजकाय गिरिजे तस्मादहं पूजये ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

दध्यम्भोनिधिसम्भवैर्निबिडितं तत्खण्डमण्डं दधि
प्रोद्यड्डिण्डिममण्डलाभमगजे दत्वा स्वलिङ्गोत्तमे ।
गोदोहप्रथिते प्रदोषसमये सन्दारिताघौघके
कार्यं पूजनमेतदेव समये सर्वैः सुरैरप्यहम् ॥
तल्लिङ्गं परिपूजयामि वसुधाधृग्धुर्यमौलौ निश –
श्चोत्तुङ्गमलरत्नकुम्भविलसत्प्राज्याज्यधारादिभिः ।
स्वाज्याम्भोधिसमाहतैर्मम गणैः सङ्ख्यातिगं तद्घृतं
तत्राज्यामलगन्धसारसुभगा गन्धीकृतास्ता दिशः ॥
सिञ्चामि प्रसभं सुगोघृतघनैः कैलासलिङ्गं मम
मध्वम्भोधिसमाहृतैर्मणिघटैर्माध्वीकसारं मधु ।
गर्भोद्यन्मणिसारकान्तिसुभगैर्गोमेधिकाच्छप्रभैः
सिञ्चाम्यद्रिवरात्मजे सुमधुराधारेयगर्भं मधु ॥
धाराकारमदीयलिङ्गशिरसि हर्षेण पश्याम्बिके
शैलोद्दामशिखानिभाःशिखरितादुत्तुङ्गसारोपमाः ।
प्रालेयाचलमौलिसारसुभगाश्चापाण्डुराःशर्करा
दत्वा तन्मम लिङ्गमौलिविलसच्चण्डांशुधारा समम् ।
हर्षाप्लाविहृदन्तरः प्रतिदिनं हृष्यामि पश्याद्रिजे
कुल्यांस्तत्र मनोरमाद्रितनये नारेलनीलोद्भवाः ।
ताभिः सम्भृतसद्घटादिविततैर्लक्षैः प्रवाहाकुला
तल्लिङ्गसेकनीरैः प्रवहति मधुजा देवगङ्गेति नाम्ना ॥
(सर्वे विष्णुपितामहेन्द्रवरुणाश्चामन्दभक्त्या वृताः—

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सेवन्ते सततं नितान्तमगजे जेतुं पुनःसंसृतिं
तुङ्गौघतरङ्गभङ्गसुभगास्तस्यान्तरास्ते सुराः ॥

सप्तच्छदाच्छफलशैलवरोऽद्रिकन्ये
क्लृप्तो मया सुगुरुपीततरश्च मेरोः ।
तज्जैस्त्वगाररहितैः शशिखण्डमौलि—
लिङ्गार्चनस्य फलमेव जनुर्भवानि ॥
उत्तुङ्गसालसुरसालरसालसारै—
र्निष्टप्तहेमझरिसोदरगर्भजातैः ।
तल्लिङ्गसेचनमुमे सुघटैः करोमि
पुंसामपि प्रमथनाथपदं ददाति ॥
देवि स्त्रीकुचसन्निकाशलिकुचापारप्रभागन्धज-
स्फारासारमहारसादिकलशैःसंसेचयाम्यम्बिके ।
कैलासाचललिङ्गमौलिविलसत्(लिङ्गैक)सद्भूषणं
लिङ्गं त्वेतदपारगन्धलुलितैर्नीरैश्च गन्धोदकैः ॥
इक्षुसागरमहोर्मिभिरीशे
लिङ्गमौलिरियमेव विशिष्टा ।
सिक्तये घटसहस्रगधारा—
कारिता गिरिसुते कमनीया ॥
कोशैः काननसम्भवैर्मधुझरीसारातिसारस्फुटं
निर्यत्पीततरातिकान्तिनिवहैर्गन्धीकृताशामुखैः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तत्कोशामलराजिभिर्गिरिसुते सञ्छन्नमैशं शिरः
पश्यामि प्रथितेक्षणः प्रकटिते पुण्ये प्रदोषे मम ॥
कस्तूरीघनसारकुङ्कुममहापाटीरसारैर्घटै–
श्चन्द्रासारविलोलिताम्बुघटितैः सत्पाटलामोदितैः ।
श्रान्ता मे गणपुङ्गवाश्च नितरां पुण्ये प्रदोषे मम
स्वादूदामलनीलधारितघटोद्वाहे परं शैलजे ॥
शङ्खानां च सहस्रकैर्मणिचितैर्गोश्रृङ्गधारादिभिः
क्षीराज्यादिमधुप्रवाहजलधिप्लुष्टैश्च तैलैरपि ।
तद्गन्धोत्तमपिष्टलेपनगतश्रीचिक्कणाघर्षणैः
श्रीपत्रैर्मृदुसारसूक्ष्मतृणकैरुत्पञ्चगव्यैरपि ॥
सौवर्णोत्तमकुम्भसम्भवमहाधारासहस्रैः शतैः
अर्घ्यै रत्नसुवर्णकल्पितकुशाग्राम्बूद्भवैस्तज्जलैः ॥
अष्टाङ्गार्घ्यक कल्पितैः सुमधुरैर्गर्भाम्बुकुम्भैः शिवे
संसिच्याखिलमिन्दुकुन्दजमहापाटीरसत्पाटलाः ।
मोदोत्थाम्बुदसन्निभैश्च कलशैस्तौर्यत्रिकोद्भावनै–
र्धूपैश्चापि महामधूत्थमधुपर्कासारपारैरपि ॥
प्रदोषसमये मया शरदुदीचराकाशशि–
प्रकाशचयसौहृदे विमलकुड्मलैरन्धसाम् ।
मदीयरजताचलप्रकटशङ्खिभाराशिभिः
सुधाकरकलालसल्ललितलिङ्गमौल्यर्पितैः ।
वेदाश्चत्वार एते प्रथित मम(तम)यशः स्तोमधारानुरागाः
स्वादूदामलनीरसेचनविधौ शाखाशिखाभिः क्रमात् ।
रुद्राणां स्तवनेन मामपि शिवे सन्तोषयन्तः स्थिता–
मूर्तास्ते विहिताग्रपङ्कजकरा विश्वासभूता मम ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

घनरसमृगनाभिसारधारा—
मृगमदपटलीपटीरचन्द्रगन्धैः ।
परिवीतं भुजगेशसन्निवीतं
प्रभया कोटिशशाङ्क सूर्यतुल्यम् ॥
गोत्राधिराजतनये विनयेन पश्य
सम्पश्यदात्मगतिसौख्यदमेकभास्वत् ।
घुमुघुमितसुगन्धगन्धिताशा—
मुखमुखरैः परिलिप्य लिङ्गमेतत् ॥
परिहृष्टो नितरां भवामि गौरि
त्रिदशालभ्यसुगन्धयक्षकर्दमैः ।
मणिजालाततरलकूलचित्रैः
परिधायामलस्वर्णसद्दुकूलैः ॥
शिवलिङ्गं मम शैलराजकन्ये
परिपश्यामि सुगन्धिगन्धवस्त्रैः ।
ब्रह्माण्डगोलकमुमे प्रभया न तुल्यं
मल्लिङ्गगोलकवरोत्तमरत्नधारा ॥
(भा)सावधूतशशिमौलिकलाललामं
तद्रत्नमौल्यकलने न विधिर्न विष्णुः ।
यक्षाधिपोऽप्यगसुतेऽद्य विकुण्ठिताक्षः
केऽन्ये क्षमा वद समानहृदा निरीक्ष्य ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

फणामणिसहस्रकैर्विधृतवक्त्रमुक्ताफलैः
प्रभाततसभावलीमणिगणात्तकान्त्यायुतम् ।
त्रिपुण्ड्रनिटिलोल्लसत्तिलकिताच्छसद्धीरकं
प्रपश्य गिरीकन्यके विमलमौलिलिङ्गं मम ॥

सहस्रमुखसत्फणिप्रवरमौलिमाणिक्य स-
द्द्युतीविजितकान्तितो मम स्वभोगसंवेष्टितैः ।
फणाछविकृताम्बरछविजिताद्यसच्छत्रकं
शिवे शिरसि मे सदा दधति लिङ्गमौलौ मम ॥

विश्वेश्वराख्यवरलिङ्गसमानमान-
मानन्दसौख्यदमिदं मम सुप्रिये यत् ।
हन्तुं समग्रजनपातकराशिमेव
सर्वार्थराशिदमिदं परिपूजयामि ॥

नानामणिद्युतिसरावलिभूषितं त-
न्मल्लिङ्गमेव कमलाच्छदृशा प्रपश्य ।
पुण्ये प्रदोषसमये मुदितस्त्वयाहं
तल्लिङ्गमध्यभवने महिमास्थितोऽहम् ॥

विकसितसितपद्मरत्नकञ्जमाला-
नवनीलोत्पलजैःसहस्रमालिकाभिः ।
दिनान्तसमयोल्लसन्मधुरगन्धजातीसरै-
र्वसन्तकलिकास्फुरन्मधुरगन्धमल्लीसरैः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

विकुण्ठितमिदं मम प्रकटसोमधाम प्रभा—
समुत्थमगकन्यके विमलद्रोणमालायुतम् ।
कदम्बवननीपजस्फुरदपारमालाभरै—
र्विलोलवरपीठगं प्रकटमौलिलिङ्गं शिवे ॥
प्रपश्य नयनाञ्चलैर्विकचमञ्जरीकप्रभैः
प्रदोषसमयेऽम्बिके नयनजन्मनस्तत्फलम् ।
तद्बिल्वरत्नकमलैरमलैर्भवानि
पुन्नागनागनवचम्पकदूर्वयापि ।
नीलोत्पलैर्दमनकैः करवीरजाजी—
द्रोणार्क काश जवकैः(कनकैः)समर्च्य ।
सत्पुण्डरीक बकुलैर्धवकर्णिकार—
मालूर कुन्दकुसुमैरतिहर्षितोऽहम् ॥
राजीवामल मल्लिका सुमसरस्फारोत्थगन्धान्धकै —
र्लोलम्बैर्विकसत्सुमोत्थमधुपैः पश्याम्बिके पूजितम् ।
एतल्लिङ्गवरं प्रदोषसमये बिल्वीदलोत्तंसकं
धत्तूरेण हि शोभतेऽद्य नितरां मौलिस्थचन्द्राधिकम् ॥
अगरुतरु जातधूपधूमै—
र्बहुलामोद विकासिदिक्समूहैः ।
मरुदाकुललम्बितोरुधारा—
विकसत्स्वर्गपथाः प्रचारतालैः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सुवर्ण मणिभाजने शिशुनभोद्यदम्भोजिनी—
प्रियांशु चयसङ्क्रमि प्रकटदाक्ष्यरत्नांशुभिः ।
मनोरथ पथातिगैर्मम सुलिङ्गमालायितै—
स्सुपाण्डरशशि प्रभैर्हिमतुषारकुन्दप्रभैः ।
सचन्द्रवरखण्डकैर्विरचितोरुदीपावली—
सुगोघृत सुवर्तिकोज्ज्वलसुदीपजालैरपि ।
गृहाङ्गण तमस्तति प्रविददार दृत्यादरै—
रखण्डतरु(र)मण्डनैःप्रथितपद्महंसोपमैः ।
सुतारक गणावलीललित मुक्तजालप्रभै—
र्विलोकय गिरीन्द्रजे मम सुमौलिभासंकरैः ॥
नानाभक्ष्य महाद्रिगन्ध सुरसाश्चामोदितास्ता दिशः
सुस्वाद्वन्नजराशिभिश्च घृतजैः सूपप्रवाहैः शिवे ।
शाकैः शैलनिभैः मधुप्रमथितैः क्षीरादिदध्योदनैः
प्रालेयाचल सन्निभैः सुगुडकैः नैवेदितैः शङ्करि ॥
नारिकेललिकुचैः सुकपित्थैः मातुलिङ्गकदलीसुरसालैः ॥
खर्जूरैः बदरीसुगन्धजरसैः दाडिम्बनारङ्गकैः
कङ्कोलामलकैः सुरादनफलै राजादनैर्जातिकैः ।
नैवेद्येक्षुजकाण्डकैः गिरिवराज्जाते मुदे मे भवेत्
ताम्बूलैः खदिरैः लवङ्गसुखरैः जातीफलैलायुतैः ॥
मुक्ताचूर्ण सुपूर्णपूगमधुरैः कर्पूरसंवादितै—
रुत्फुल्लामलनागवल्लिजदलैः प्रोद्यद्गिरीन्द्रप्रभैः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नैवेद्यं परिकल्पयामि गिरिजे तस्मिन् प्रदोषे ह्यहं
वीणानिक्वणमञ्जुमञ्जुलसुधाधारासमैर्गायनैः ॥
मन्त्रामामृतमीश्वरेश्वरि मुदा रुद्राणिभिः कल्पितं
शम्भो शङ्कर धूर्जटे त्रिणयन कालान्धकारे हर ।
पाहीश प्रमथाधिनाथ महिमन् लिङ्गाकृते पाहि नः
रत्नैः कल्पित मद्दलध्वनियुतैः शङ्खोत्थनादैः शिवे ॥
प्रोद्यत्काहल निस्वनैर्मधुरितं तन्मड्डुडिण्डीरवैः ॥
दुन्दुभ्याघातनादैः मम गणवरगास्योरुनिश्वासरागैः
वेणूरन्ध्रनिषेवणाङ्गुलिभवैस्तालैश्च सज्झल्लरैः ।
तुष्टोऽहं प्रथिते प्रदोषसमये तल्लिङ्गसेकादरो
नान्यत्किञ्चिदवेदिषं त्रिजगतां व्यापारमप्यद्रिजे ॥

रङ्गे तुङ्गतरङ्गभङ्गचपलैर्नृत्यैर्महामर्दलैः
वीणावेणु निनाद साम्यलयतो नृत्यन्ति लिङ्गाग्रतः ।
रुद्राणीगण कोटयोऽत्र सुभगे मञ्जीर शिञ्जस्वनैः
शम्भो शङ्कर साम्ब पाहि शिव नस्तूर्णं प्रसादं कुरु ॥
इत्येवं सुभगा विलासमधुरा हावैश्च भावैरपि
चोत्क्रान्तावृतरत्नकान्ति विलसत्फोल(पूर्णे)न्दु साम्याननाः ।
कुम्भोद्यत्करिकुम्भसन्निभकुचाः काञ्चीझणन्निस्वनाः
तालोत्थाहतिपादपद्मजरवैः कुर्वन्ति विद्युद्ध्वनिम् ॥
गणेश करभास्वता विविधलोकसाम्राज्यधुग्—
विविक्तकृतलाञ्छनैः शशिसुवृत्तमुक्ताशतैः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

महोडुगणमौक्तिकीप्रकटतारपङ्क्तीततैः
गिरीन्द्रतनये धृतान्यमितछत्रकोट्यो गुणैः(गणैः) ॥
वरटारमणोत्थकामिताङ्गो–
त्थितपक्षाहननाभचामरौघैः ।
गणवृन्दैरखिलैश्च सेव्यमानं
मम लिङ्गलयधूननैः शिवेऽद्य ॥
प्रवालमयदण्डिना मलयशैलभूमारुत–
सुपोततरवायुना नगवरारिपाणीजुषा ।
जयेन चमरीमृगप्रचल वालगुच्छात्मना
सुवीजितमुमे तदा मम सुलिङ्गमत्यादरात् ॥
धृतैः प्रमथपाणिभिः वनकलापिपिञ्छोच्चयैः
कृतैर्व्यजनकोटिभिः हरितकोटिचन्द्रांशुभिः ।
मदीय मणिमण्टपं हरिमणीभिराकल्पित–
मिवाद्य गिरिजे तदा प्रथितभाभिरादीपितम् ॥
प्रमथप्रकरोर्ध्वहस्तसंस्थैः
मणिवर्यैर्विविधैःसराग्रलम्बैः ॥
विलसन्नवरत्नगुच्छसच्छैः
ध(धु) वदीशान वराग्रका:(गाः)पताकाः ।
लिङ्गप्रक्रमणैरहं स इति तल्लिङ्गप्रणामादरः
स्वात्मानं परिचिन्तयामि गिरिजेऽप्यानन्दधारावृतः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वृत्यु(प्रत्यु)त्थाखिललोकजालमखिलं मत्तो न भिन्नं क्वचित्
किञ्चात्रापि शिवे ममैव मनसः सङ्कल्पजातं जगत् ।

मय्येवागसुते लयं प्रयाति निखिलं चैकोऽद्वयोऽहं सदा
नानेति प्रसभं वदन्ति निगमा वाचां मनोदूरगम् ॥
अन्यानन्दमुमे मदीयममलं जानन्ति नो योगिनः
नो वेदा यतयः सुरासुरगणा विष्ण्वादयोऽप्यब्जजः
।(विष्ण्वब्जशक्रादयः)
ज्ञानं ज्ञेयमिदं जगद्गतमुमे ज्ञाता न किञ्चित्स्थितिः
भूमाहं सुखधामको हि महतां ह्रस्वो न चाणुः स्थिरः ।
स्वात्मानन्दमुमे ममाल्पकमिदं लिङ्गोऽप्यलिङ्गोऽस्म्यहं
आ(चा)काशादिविदूरगस्थितिलयोत्पत्तिष्वसङ्गोऽस्म्यहम्
इत्येवं परमार्थतस्त्रिभुवने तिष्ठामि विश्वातिगः
गोप्यं मद्धृदयं गिरीन्द्रतनये तुभ्यं मया दर्शितम् ।
इत्युक्त्वा परमेश्वरस्त्रिजगतां नाथोऽपि विश्वाकृतिः
दृष्ट्वा लिङ्गमपारबिल्वकुसुमैः सम्पूजितं मस्तके ॥
दृष्ट्वा तामगजां ननर्त परमानन्दप्रसादैकभूः
कैलासाचलमौलिमण्टपवरे तल्लिङ्ग सान्निध्यके ।

अण्डखण्डनमहाघनघोष–
श्चण्डताण्डवललद्विधिमुण्डः ।
कुण्डलीशकृतकुण्डलगण्ड–
स्तण्डुमड्डुनिनदोत्थलयाङ्घ्रिः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नन्दिभृङ्गिकृतडिण्डिमनादैः
मण्डितो हि शिवया स हि रङ्गः ।
डुण्डिराजकृत शङ्खनिनादै–
स्तुण्डषट्ककृत तूर्यनिनादैः ॥

जटाच्छटविघर्षिताः परिपतन्ति तारागणाः
वमन्ति रुधिरं मुखैर्भुवननागनागा नगाः ।
जगन्नटन सम्भ्रमाद्भवति हेलयान्दोलितं
हरीन्द्रविधयः सुराः मुनिजनाः सकम्पाङ्कयाः ।
अष्टावक्र सुगीतसाममुरजोच्चण्डप्रचण्डोल्लस–
डिण्डीमध्वनि मड्डुमद्दलमहासामाष्टदंष्ट्रारवैः ॥

भ्राजत्पद्मजमुण्डषण्डजमहामालालसद्वक्षसं
लीलाचालितहस्तकङ्कणमहानागोर्ध्वमौलीलसत् ।
रत्नाप्लावितकान्तिरञ्जितदृशं नृत्यन्तमैक्षच्छिवा
चोद्यद्भानुमरीचिसन्निभजटा साम्राज्यपट्टायिता ।
लोलन्नील सुरक्तपङ्कजलसद्गङ्गातरङ्गोस्थिता
पारावारसुधाघनोत्थनटनाटोपा फणीमञ्जुलम् ।
आनम्राखिल लोकजालमुमया सद्रत्नरङ्गान्तरे
नृत्यन्तं ददृशुः सुरेन्द्रगणपाः कैलासमौलिस्थितम्

झलञ्झलितकङ्कणं पदवलत्क्वणन्नूपुरं
किणिङ्किणितसद्ध्वनिं स्फटिकरत्नसन्मेखलम् ।
घुणङ्घुणकृतारवं पदगरत्न मञ्जीरकं

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चटच्चटरवोत्थितप्रपदपद्मघोषं शिवम् ।
तौर्यत्रिकोत्थित महारव जातघोष–
लोकत्रयोद्गतसुरासुर किन्नरेड्यम् ।
मन्दस्मिताखिल विमोहनवेषभूतं
राजच्छशाङ्कमहसा धवलीकृताशम् ।
तं नीललोहितमुमा जगदादिहेतुं
नृत्यन्तमिष्टदमुपैति च तुष्टवक्त्रम् ।
अष्टाकृतिं निखिलकष्टहरं प्रदोषेऽ–
पश्यच्छिवा सुकरुणारससारदृष्ट्या ॥

तां वीक्ष्यागसुतां स्मयन्निव महादेवःस कैलासभू–
कैलासेश्वरपूजया सरसया कष्टानि सञ्जह्विवान् ।
लोकानां गणपात्मनामउमां प्राह प्रसन्नाननः
पश्याम्बेति वदन् सदाशिव तरोर्मुग्धेन्दुचूडः शिवः ॥

ईश्वर उवाच–

कैलासेश्वरलिङ्गमेतदमलं मुक्तिप्रदं शाश्वतं
चाऽऽपातालनिमग्नमूलमसकृत् सम्पूजितं तन्मया ॥
तस्योर्ध्वामल मौलिरप्यगसुते जानन्ति नैवागमाः
देवाद्यैर्मुनिभिस्त्वयापि च मया को वास्ति तत्पूजकः

पूजापूजकपूज्यशब्दरहितं तत्केवलोऽहं शिवः
तल्लिङ्गं च सदा चकास्ति(गिरिजे)मच्छैलवर्येऽम्बिके ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तद्दर्शनार्थं मुनयः सुरासुरा–
स्तप्यन्ति चाद्यपि जगत्यविप्लवाः ।

देवी (उवाच)

त्वयापि न ज्ञायत इत्यहो मे
साश्चर्यमुक्तं हि त्वया सदाशिव ।
तथापि तत्किं कृतलिङ्गपूजया
रहस्यमेतन्मम तद्वद प्रभो ॥

इत्युक्तं गिरिजामनोहरवचः श्रुत्वा प्रहस्याम्बिकां
लोकं स्रष्टुमथात्ति पाति सुतरां तत्पालकः शङ्करः ।
वाचा चन्दनशीतया सुखकरःशीतांशधारी शिवः
प्राहोत्फुल्ल मनोहराब्जवदनो देवीं तदा भूतपः ॥

ईश्वरः

न कर्मणा नैव समाधिभिर्जपै–
स्तपस्यया वा विविधैश्च यज्ञैः ।
व्रतैश्च दानैर्नियमैर्यमैश्च ।
प्राप्नोति किं मत्पदपूजनं विना ॥
तस्मादहं लिङ्गवरं सदा मुदा
सम्पूजयामीष्टदमेव लोकान् ।
संरक्षितुं कार्यमिदं विमुक्त्यै
सर्वार्थदंचेति मतं मुदे मम ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ध्यायामि तद्वेदशिरोऽधिगम्यं
ओङ्कारगम्यं परमार्थतत्त्वम् ।
सत्यं शिवं ज्ञानसुखं सुबोधं
निर्द्वन्द्वमद्वैतमनन्तरूपम् ।
एकं स्थिरं शाश्वतमव्ययं त–
त्प्राक् सृष्टितो विश्वमिदं न यत्र ॥
संवीक्षं तत्पुनरुद्बभूव
तदेव जाये हृदि भावयामि ।
(यस्मात्परं नापरमस्ति किञ्चित्
यस्माद्गरीयो न हि किञ्चिदस्ति ।
येनैव पूर्णं परिदृश्यमानं
विश्वं तदेवाद्य विभावयामि ॥

इत्युक्त्वा गिरिजां महाशिवतरो ध्यायन् भवःस्थाणुवत्
निर्व्यापारतरङ्गसागर इवात्य(इवाप्य)क्षुद्रगात्रः शिवः ।
देवीचापि मुमोद हर्षभरिताऽऽनन्दाङ्कास्ते गणाः
इत्येतस्य सुपूजनं मुनिवराःसत्यं वदामि स्फुटम् ।

*इति श्रीशिवरहस्ये प्रथमांशे कैलासेश्वर(प्रदोष) पूजा–
वर्णनं नाम त्रयोदशोऽध्यायः ॥*

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ चतुर्दशोऽध्यायः ॥

मुनिदेवगणा ऊचुः—

कुमार सा(मा)रसङ्काश मारमराङ्गसम्भव ।
उमारमणपादाब्जध्यानमारितपातक ॥
अमरारिमहाशूरतारकासुरसंहृते ।
त्वत्तः श्रुतमशेषेण कैलासेशस्य पूजनम् ॥
भवद्वक्त्रोत्थितशिवकथानन्दितमानसाः ।
निर्धूतपातका जाता धन्याः पावनपावनाः ॥
पुनः शिवकथासिन्धुतरङ्गोद्यतमानसान्
कुरुष्व त्रिपुराराितवरपुत्रातुलप्रभ ॥

सूतः—

इत्थं देवैश्च मुनिभिर्गणपैः प्रार्थितः सदा ।
कुमारः प्राह तान् धन्यान् जैगीषव्यं पुरःस्थितम्

परिणत हिमधामकान्तवक्त्रः
स्फुटपद्मोपमलोचनो नगारिः ।
नवचम्पककुड्मलाभनासः
कुरुविन्दाभरदो बभाण विप्रम् ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्कन्द उवाच–

पर्णादा मुनयः सर्वे ह्यपर्णापतिवैभवम् ।
तूर्णमभ्यर्णगाःसर्वे समाकर्णयताऽधुना ॥
सुपर्णवाहनाद्याश्च यूयं कर्णरसायनम् ।
अर्णवान्तर्निवसतेश्चरितं वर्णयाम्यहम् ॥
महाकैलासभूभागे पञ्चकोटिप्रमाणके ।
शैलप्राकारमध्ये तु गणानां वसतिःकृता ॥
नवलक्षप्रमाणेन पूर्वद्वारादिगोपुरम् ।
नीलशैलजसारेण नानारुद्रगणान्वितम् ॥
पट्टिकापिण्डकाद्यैश्च देवकोष्ठैश्च शोभितम् ।
महद्भिरुच्छ्रितैःश्रृङ्गैरुल्लिखन्तमिवाम्बरम् ॥
(दशसाहस्रफलकैर्गवाक्षितमिव स्थितम् ।
वृषभैश्च शिलाराजद्भद्ररूपैः परीवृतम् ॥
नन्दीश्वरालयं तत्र हे(है)मरौप्यविराजितम् ।
सहस्रस्तम्भसंयुक्तं पताकोज्ज्वलकुम्भकम् ।
कक्ष्यागवाक्षविततं सिह्मासनवरान्वितम् ।
तत्रस्थं नन्दिकेशानं स्वर्णवेत्रलसत्करम् ।
नवरत्न प्रभाभास्वत्किरीटाकल्पशोभितम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सोमधामसमानास्यं राजद्बालेन्दुशेखरम् ।
चतुर्भुजमुदाराङ्गं त्रिपुण्ड्रोज्वलफालकम् ।
भस्माभ्यक्तं जटाशोभिमस्तकं(रक्त)(रत्न)कुण्डलम् ॥
मुक्तान्तरितरुद्राक्षमालाशतविराजितम् ।
सुयशापतिमाशास्यं ध्यानपूतहृदन्तरम् ।
गणपैश्च मुनीन्द्रैश्च सुरेन्द्रैर्नारदादिभिः ।
गन्धर्वाप्सरसां सङ्घैः रुद्रैर्नागैश्च सिद्धकैः ॥
उपासितं महात्मानमिन्द्रेण मरुतो यथा ।
सेवितं नन्दिकेशानं प्रमथैःपरिवारितम् ॥
तत्रालयं महेशस्य नवरत्नविचित्तम् ।
हेमप्राकारसम्पन्नं नानावृषभशोभितम् ॥
गर्भागारं तत्र शम्भोः स्फटिकोपलनिर्मितम् ।
नन्दीश्वराभिधं लिङ्गं तत्रास्त्येकं मनोहरम् ॥
दर्शनात्स्पर्शनाच्चापि पापसङ्घनिबर्हणम् ।
धूपदीपोपहाराद्यैर्भक्ष्यैर्भोज्यैश्च नित्यशः ॥
कमलामलमालाभिर्नीलोत्पलसहस्रकैः ।
बिल्वचम्पकपुन्नागबकधुत्तूरपाटलैः ॥
सहस्रबिल्वपत्रैश्च पञ्चामृतनिषेचनैः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

साम्राण्यगरुधूपैश्च दीपैः कर्पूरखण्डजैः ॥

पूजयन्तं महेशानं नन्दिकेशं शिलादजम् ।

स्तोत्रैःस्तुवन्तमीशानं त्रिकालं सावधानतः ॥

तत्स्तुतिं कथयाम्यद्य तन्मुने श्रृणु सादरम् ॥

नन्दिकेश्वर उवाच–

इन्दुखण्डललितामलमौले

कुन्दकान्तिसदृशोत्तम देव ।

इन्दिरारमणलोचनपूज्य

मन्मनोगहनपङ्कजवास ॥

स्कन्दः–

इत्थं स्तुवन्तं तल्लिङ्गं प्राक्प्राकारस्य सौधकः ।

संस्थितः सुयशानाथो गणकोटिपरीवृतः ॥

निषधो हेमकूटश्च प्राक्प्राकारस्य पर्वताः ।

पञ्चलक्षप्रमाणेन तत्रैवाग्नेयगोपुरम् ।

रुद्रावतारचरितैर्वृषभैः शिखरैर्वृतम् ।

तत्रालयं विकेशस्य(महेशस्य)गणेन्द्रस्य महात्मनः ॥

लिङ्गाकारस्तत्र शम्भुः सुकेशेश्वरसंज्ञकः ।

पूजितो गणपेन्द्रेण गणलक्षैः परीवृतः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सुकेशेन स्तुतं लिङ्गं सुकेशेश्वरसंज्ञितम् ।
पूजितं च त्रिकालेषु बिल्वपत्रैः सुमैस्तथा ॥

सुकेशः–

पञ्चकोशगगनातिग शम्भो
व्योमकेश गुणसारसहंस ।
काशिकापुरनिवास महेश
पाहि शङ्कर सुकेश महेश ।

नीलश्च मन्दरश्चैव प्राकारे दक्षिणे नगाः ।
तत्रापि गोपुरं शम्भोः नानारुद्रगणावृतम् ।
दशलक्षप्रमाणेन ह्युच्छ्रितं गगनातिगम् ।
उल्लिखन्तं देवमार्गंसहस्रतलसंयुतम् ।
रुद्रावतारक्रीडाभिः वृषभैश्चैव शोभितम् ।
चण्डीश्वरालयं तत्र तप्तहेमविभूषितम् ।
सहस्रस्तम्भसंयुक्तं मुक्तावितततोरणम् ।
नीलसन्मणिसङ्क्लृप्तं कक्ष्याशतविराजितम् ।
सौधापारलसच्छृङ्गैरुपेतं वनभूषितम् ।
तत्र सिह्मासनासीनं विद्युत्पिङ्गजटाधरम् ।
पर्वशर्वरिनाथार्धधरं भस्मविभूषितम् ।
त्रिपुण्ड्रविलसत्फालं रुद्राक्षाभरणान्वितम् ।
महार्हवसनोपेतं नवरत्नपरिष्कृतम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

निमीलिताक्षं ध्यायन्तं दिव्यं शम्भोःपदाम्बुजम् ।
किम्पुरुषैःसिद्धसाध्यैश्च मुनिवृन्दैर्यमेन च ।
(किम्पूरुषैःसिद्धसाध्यैर्मुनिवृन्दैर्यमेन च)
गणेन्द्रैः सेवितपदं रुद्रसङ्घैर्निषेवितम् ।
तत्रेश्वरस्य सदनं मदनान्तकरस्य च ।
प्राकारगोपुरोपेतं-नवरत्नप्रकल्पितम् ।
चण्डिकेशेश्वरं लिङ्गं चण्डपापविनाशनम् ।
तल्लिङ्गज्योतिषा सर्वे ज्यो(द्यो)तिताःसूर्यसोमकाः ।
तल्लिङ्गं पूजयत्येष त्रिकालं चण्डिकेश्वरः ।
बिल्वैर्मन्दारकुसुमैर्मल्लिकाकरवीरकैः ।
कर्णिकारैरपामार्गैर्मालाभिरपि शङ्करम् ।
धूपधीपोपहाराद्यैर्नर्तकैः(नैः)करतालनैः ।
स्तोत्रैः स्तौति महादेवं प्राञ्जलिश्चण्डिकेश्वरः ॥

चण्डिकेश्वरः–

चण्डीश खण्डपरशो शशिखण्डचूड
ब्रह्माण्डमौलिग धराधरकार्मुकेश ।
विध्युत्थमुण्डवरमालक कुण्डलीश–
उच्चण्डताण्डव महेश्वर शूलदण्ड ॥

स्कन्दः–

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

इत्थं विधाय स्तुतिमादरेण
चण्डीश्वरस्त्रिजगतां पतिमिन्दुमौलिम् ।
नत्वा महेश्वरपदाम्बुरुहं सदैव
ध्यायन् स्वकीयहृदयाब्जसुखं विधत्ते ॥

*इति श्रीशिवरहस्ये प्रथमांशे कैलास-प्राकारवर्णनं नाम चतुर्दशोऽध्यायः*

## ॥ पञ्चदशोऽध्यायः ॥

**स्कन्द उवाच**

नैरृते गोपुरं शम्भोः पञ्चलक्षप्रमाणकम् ।
रुद्राणां चरितैश्चैव शोभितं शिखरैरपि ।
बाणस्तत्र महादेवमुपास्ते गणलक्षकैः ।
नवरत्नसरोभूषो महाप्रासादमध्यगः ।
तदालयं रत्नक्लृप्तं सहस्रस्तम्भमण्डितम् ।
तत्र बाणेश्वरागारं तेन लिङ्गं समर्चितम् ।
मण्डपैर्गोपुरैर्युक्तं त्रिकालं बिल्वपत्रकैः ।

**बाणः(उवाच)**

बाणेश शम्भो हरिबाणपाणे
त्वं पाहि गङ्गाधर चन्द्रचूड ।
विश्वेश भर्ग मदनान्तक कालकाल
मामद्य शङ्कर विभो गणनाथपूज्य ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

भद्राणि मे संविधत्स्वाद्य शम्भो

दीक्षादिदक्षाध्वरध्वंसकाव

महेशान पञ्चाननेन्दु प्रकृष्टै—

कधाम प्रभो सम्प्रसीद प्रसीद ॥

इत्थं स्तौति गणेन्द्रोऽसौ बाणो बाणेश्वरे शिवम्

नैरृऋते गोपुरे तत्र प्रासादवरमध्यगः ॥

अस्ताद्रिःपारियात्रश्च पश्चात्प्राकारसन्नगाः ।

तत्रैव गोपुरं शम्भोर्दशलक्षैकयोजनम् ।

पट्टिकादेवकोष्ठैश्च स्तम्भैःकुम्भैश्च कोणजैः ।

रुद्रावतारक्रीडाभी रचितं वृषभैर्वृतम् ।

तलानां च सहस्रेण निर्मितं चित्रवेदिकम् ।

सुवर्णरत्नकलशैः कैलासादपि सुन्दरम् ।

तत्रास्ति सौधप्रवरं सहस्रस्तम्भमण्डितम् ।

मणिमाणिक्यखचितं दिव्यसिह्मासनैर्युतम् ।

धूपदीपादिबहुलं भक्ष्यभोज्यसमन्वितम् ।

तत्र श्रृङ्गी महातेजा भस्मोद्धूलितविग्रहः ।

त्रिपुण्ड्रविलसत्फालो मणिमाणिक्यकङ्कणः ।

चन्द्रार्धशेखराबद्धराजत्पिङ्गजटाधरः ।

सिह्मासनस्थो वरदो गन्धर्वैर्गणपैर्वृतः ।

वरुणेन च गन्धर्वैर्गरुडैरप्सरोगणैः ।

सेवितो रत्नसौधस्थो दशलक्षगणैर्वृतः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वासुकिः शङ्खपालश्च कम्बलाश्वतरौ तथा ।
शेषश्च तक्षकश्चैव दैत्यनाथैर्नृपैस्तथा ।
उपासते(स्तेऽत्र)भृङ्गिरिटिः शिवध्यानहताशुभः ।
तत्रास्ति गर्भभवनं प्राकारवरगोपुरम् ।
भृङ्गीश्वराख्यं तल्लिङ्गं संपूज्य स्तौति भक्तितः ।
पञ्चामृतैः फलरसैः पञ्चगव्योदकैरपि ।
चन्दनैः पुष्पमालाभिर्बिल्वमन्दारचम्पकैः ।
धूपैर्दीपैस्तथापुष्पैः नैवेद्यैर्मुखवासजैः ।

भृङ्गी–

भृङ्गीश मे मनसिजस्तव पादपद्म-
भृङ्गो भवत्वनुदिनं सरसानुमोदः ।
प्राप्नोतु भक्तिमखिलां तव पादपद्मे
माया तु यातु दुरितं चरितं तवेश ॥
श्रीशङ्करामयहरेश्वर विश्वमूर्ते
विश्वाधिकेश कररङ्गकुरङ्गबाल ।
मन्दारकुन्दनवचम्पकबिल्वमाला-
दिव्योत्तमाङ्गदभुजङ्ग सुरेश पाहि ।

स्कन्दः–

इत्थं स्तौति सदाकालं शङ्करं लोकशङ्करम् ।
गणानां दशलक्षैश्च स्वसमानैःपरीवृतः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वायव्यगोपुरं शम्भोः पञ्चलक्षप्रमाणतः ।
रुद्रावतारक्रीडाभिरन्वितं मणिवेदिकम् ॥
रत्नकुम्भशताकीर्णं वायूद्धूतपताककम् ।
वृषभालङ्कृतं दिव्यं तत्र सौधो महात्मनः ।
सहस्रस्तम्भसंयुक्तो हेमासनवराश्रितः ।
रिटिरास्ते शिवध्यानविधूताखिलहृत्तमः ।
भस्माभ्यक्तस्त्रिपुण्ड्राङ्को रत्नाकल्पविभूषितः ।
सोमार्धशेखरोद्भासिमकुटो वायुसेवितः ।
द्विलक्षगणपैश्चैव रुद्रवृन्दनिषेवितः ।
तत्र गर्भगृहं शम्भो रिटीशस्य महेशितुः ।
प्राकारगोपुरोपेतं धूपैर्दीपैर्मनोहरैः ।
जातीमल्लिकमन्दारबिल्वैरभ्यर्च्य शङ्करम् ।
कराञ्जलिपुटः स्तौति रिटीशं भक्तिभावितः ।
समुद्यत्पुलको देवं त्रिकालं लिङ्गसंस्थितम् ॥

रिटिः (उवाच)

विश्वेश विश्व मदनान्तक विश्वमूर्ते
गौरीवरामर भुजङ्गफणाभिराम ।
गङ्गाधरान्तकरिपो प्रमथाधिनाथ
पाहीश मामकधियाद्य ललामसोम ।

स्कन्द उवाच–

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

इत्थं स्तौति रिटिर्भक्त्या रिटीशं मुदितान्तरः ।
ततो(अथो)त्तरे च प्राकारे संस्थिताश्च कुलाचलाः ।
दुन्दुभिर्मन्दरो नाम्ना पर्वतो रैवतस्ततः ।
तत्रापि गोपुरं शम्भोः दशलक्षोर्ध्वगं स्थितम् ।
सहस्रतलसंयुक्तं पट्टिकावेदिकान्वितम् ।
रत्नशृङ्गाग्रविलसद्धूयमानपताककम् ।
रुद्रावतारक्रीडाभिरन्वितं वृषभैरपि ।
तत्रास्ति सौधप्रवरं माणिक्यतलकुट्टिमम् ।
सहस्रकनकस्तम्भैर्निर्मितं वनराजितम् ।
हेमसिंहासनैर्युक्तं धूपगन्धानुमोदितम् ।
मणिप्रभाभासितं च तिरस्कृततमोगुणम् ।
कालाग्निरुद्रस्तत्रास्ते यक्षेशैश्च निषेवितः ।
भस्मरुद्राक्षवीताङ्गो मुक्तामाणिक्यभूषणः ।
मकुटोद्यत्सुधाधामखण्डोज्ज्वलितवक्त्रकः ।
त्रिपुण्ड्ररेखावितत्तफालभागमनोहरः ।
त्रिशूलपाणिर्वरदो हेमसिंहासने स्थितः ।
कुबेरेण च देवैश्च पञ्चलक्षगणैरपि ।
हेतिपाशमहाशूलधरैस्तैरहिमन्युभिः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तत्रागारं महेशस्य कालरुद्रेश्वरस्य च ।

प्राकारगोपुरयुतं धूपदीपशतावृतम् ।

नैवेद्यैश्चन्दनैश्चैव बिल्वमन्दारपङ्कजैः ।

सम्पूज्य परया भक्त्या स्तौति देवि पिनाकिनम् ।

कालाग्निरुद्रः–

त्रियम्बक सदाशिव त्रिपुरमार कालान्तक
त्रिशूलवरपाशसंयुतकराद्रिबाणासन ।
प्रसादजनितानान प्रकटचण्डधामागम
सुधांशुकशिखण्डक सुरसनाथ मां पालय॥
इत्थं स्तौति प्रहृष्टात्मा कालरुद्रो महेश्वरम् ।
तस्य प्राकारकोणे च ईशान्यां दिशि संस्थितः ।
वीरभद्रः सदैवास्ते गणलक्षैः परीवृतः ।
तदुत्तरं हि कैलासं तत्र गोपुरमुत्तमम् ।
पञ्चलक्षप्रमाणेन वेदिकापट्टिकान्वितम् ।
सुवर्णरत्नखचितकलशैः शोभितं मुने ।
रुद्रावतारवृषभैः शोभितं तन्मनोहरम् ।
तत्र सौधवरे क्लृप्ते सहस्रस्तम्भमण्डपे ।
हेमरत्नचिते दिव्ये हेमसिंहासने स्थितः ॥
ईशानेन च रुद्रैश्च गणलक्षसमन्वितः ।
भस्मोद्धूलितसर्वाङ्गः त्रिपुण्ड्रपरिचिह्नितः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

राजद्रत्नाङ्गदैर्युक्तो मणिरुद्राक्षहारकः ।
मकुटोद्यत्सुधाधामखण्डार्धजटिलालकः ।
सदाशिवार्चकवरः शूलहस्तो हि भैरवः ।
तत्रैकं भवनं शम्भोर्वीरभद्रेश्वरस्य च ।
नवरत्नान्वितं दिव्यं प्रकारवरगोपुरम् [शोभितम्]
धूपामोदितदिक्चक्रं मणिद्युतिविराजितम् ।
तल्लिङ्गं पूजयत्येव बिल्वमन्दारचम्पकैः ।
दीपोपहारधूपैश्च चन्दनेनाक्षतादिभिः ।
स्तौति हृष्टस्त्रिकालं सः लिङ्गं तत्पारमेश्वरम् ।

वीरभद्रः

क्षयद्वीर दक्षाध्वरध्वंसकाशा -
वसेशान चाशाविहीनेति तुष्टः ।
त्वमेवासि भद्रं त्वमेवास्यभद्रं
सतां चासतां आशु मां मोक्षयाद्य ॥

इत्थं स्तौति सदा देवं वीरभद्रो गणाग्रणीः ।
शैलावरणमेतद्वै शम्भोः शिवगणाश्रयम् ।
दशलंक्षप्रमाणेन परिघाकृतिविस्तरम् ।
गोपुरार्बुदकोपेतं रम्यमण्डपमण्डितम् ।
सहस्रनियुतस्तम्भैः कुम्भैश्चापि समन्वितम् ।
रम्यलिङ्गालयोत्तुङ्गराजद्वृषभशेखरैः
धगद्धगिति दिक्चक्रं शैलावरणमीशितुः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

व्यायामायतदीर्घं चाप्येतद्वोऽभिहितं मया ।
एवमाभ्यन्तराक्लृप्तप्राकारवरगोपुराः ।
(एवमाभ्यन्तराःक्लृप्ताः प्राकारवरगोपुराः)
सहस्रप्रमथाधीशैः सप्तसागरमध्यगैः ।
शैलद्वीपसरिद्भिश्च निर्मितं विपिनैरपि ।
ध्यात्वाध्यायमिदं(मं) विप्र गणो भवति शाङ्करः ॥

**स्कन्दः**

सदा(नैव)प्राकारमध्ये हरिविधिहरयो नो गणा नापि वातो
नो चन्द्रो न च सूर्यरश्मिनिचयो नाग्नित्रयं नो सुराः ।
एकस्तत्र महेश्वरो विहरति स्वैरं सहाम्बो मुदा
तद्वेदैरपि वक्तुमेव कठिनं का वा कथान्यस्य हि ।
शरशरधिरथाङ्गं यत्र यानं वहा वै
धनुवरमथ तज्ज्या वैरिवर्गं रथी च ।
हरिविधिश्रुतयःक्ष्मापुष्पवन्तौ तथाब्धि-
र्नगवर उरगेन्द्रस्त्रैपुरं श्रीमहेशः ॥

*इति श्रीशिवरहस्ये प्रथमांशे शैल–*
*प्राकारवर्णनं नाम पञ्चदशोऽध्यायः ॥*

## ॥ षोडशोऽध्यायः ॥

**जैगीषव्यः-**

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शिखिवाह नमस्तेऽस्तु नगपौत्र महाप्रभो ।
सुन्दराननसन्दोह द्वादशोत्पललोचन ।
नाकनायक मैनाकमातुलानलसम्भव ।
शोकमूकसुदैत्याजिगतप्राणापहारक ।
तारकक्रौञ्चमथन पुनर्विस्तरतो वद ।
नहि तृप्यामि त्वद्वक्त्रात् कथारसं झरीभरैः ।
पुनः कियन्तः प्राकाराः पुराट्टालफसुन्दराः ।
कैलासस्य महेशस्य(या) वसतेरतुलस्य च ॥

सूतः—

इत्थं नन्दितम(वृ)न्दारो जैगीषव्येन चोदितः ।
सुरान्गणान् मुनींश्चैव प्रोत्फुल्लमुखपङ्कजः ।
उवाच प्रमथेशानं नत्वा देवीं स्वमातरम् ।

स्कन्दः—

श्रृणुध्वं ब्रह्मविष्ण्वाद्या मुनयश्च गणोत्तमाः ।
जैगीषव्य महाप्राज्ञ श्रृणु त्वममलाः कथाः ।
शम्भोर्विचित्रविमलाः श्रोत्रपात्रामलाः कथाः ।
क्षीरोदधिमहाखातप्राकारोऽस्ति तदन्तरः ।
तद्धु(उद्धू)तचन्द्रकिरणैस्तद(र)ङ्गैश्चैव भासुरः ।
रजतोच्छ्रायश्रृङ्गाग्रो महावृषभलालितः ।
नानागोपुररत्नोद्यत्प्रभाभासितदिङ्मुखः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्फटिकैःकृतदेवेशंवरसुन्दरविग्रहैः ।
शोभितो गोपुराणां च समूहैः परिशोभितः ।
तत्पूर्वदेशे/देवस्य/तत्पूर्षस्य/मनोहरम् ।
गोपुरं सौधसुभगं स्तम्भविद्रुमपुत्रिकम् ।
मणिक्लृप्ताच्छवलभीनिर्यत्पारावतीगणम् ।
तत्रसिंह्यासनवरं-नवरत्नविचित्रितम् ।
तत्र स्थितैः(स्थित)गणैर्दिव्यैःशूलतेजोलसत्करैः ।
कपर्दधृतचन्द्राङ्कैर्भ(भा)सितामललोचनैः ।
त्रिपुण्ड्रलेखोज्ज्वलितफालैः फालविलोचनैः ।
रत्नान्तरितरुद्राक्षमालाललितकन्धरैः ।
नीरदोद्यत्प्रभाभास्वन्नीरजोपमकन्धरैः ।
वाताशनकृतोच्छ्वासचलद्धारमनोहरैः ।
महाडमरुनादेन भीषिताखिलदिक्तटैः ।
फणामणिकृतापारनूपुराङ्गदकङ्कणैः ।
रणन्मञ्जीरवलयैः सिंह्यसंहननैर्गणैः ।
पुण्डरीकाजिनभवत्कृष्णरेखाकटीतटैः ।
महेभचर्मवसनैः बालातपसमप्रभैः ।
गणेन्द्रैर्वारणेन्द्राभैः करिशुण्डोरुबाहुभिः ।
अहिमन्युभिरुत्कृष्टैः कोटिभिर्गणपैर्वृतः ।
पृषत्क कर निस्त्रिंशबाणासनधरैर्वरैः ।
पूर्वतो भाति तत्पूर्ष इन्दुकुन्दसमप्रभः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

जटामकुटसंशोभिराजराजकलाधरः ।
भस्माभ्यक्तस्त्रिपुण्ड्राङ्कश्चतुर्बाहुरुदारधीः ।
त्रिणेत्रो नीलकण्ठश्च बालसूर्यायुतप्रभः ।
तत्पूरुषं महालिङ्गं सर्वदा वरिवस्यया ।
समर्चयति विप्रेन्द्र बिल्वपत्रैः शिवार्चकः ।
संस्तौति सावधानेन तल्लिङ्गं रत्नधामगम् ।

तत्पूर्ष उवाच–

स्वच्छछत्राभिरामं छविजितरजतं छन्दसां गीततुष्टं
स्वच्छन्दायां निरिच्छोदधिनिजमहिगोच्छन्नमच्छाच्छदेहम् ।
छद्मेभारिछदाच्छच्छदमजमजरं पिच्छतापिच्छगुच्छ-
च्छायासच्छायवामाङ्गममदधिषणे सद्विपच्छेदनेच्छम् ॥

आशीविषाङ्गद सदैव महेश काशी-
वासीकृतानन्दवन प्रसीद ।
संसारवाराशितरे पुरारे
कीनाशनाशभयमाशु विनाशयाद्य ॥

स्कन्दः-

इत्थं स्तौति सदाकालं तत्पूर्षः परमेश्वरम् ।
तत्रास्ते गणपाधीशः प्राचीं तां पालयन्दिशम् ॥
क्षारोदधिपरिवृतः कालायसविनिर्मितः ।
प्राकारो राजते विप्र दक्षिणे गोपुरैर्वृतः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

इन्द्रनीलमणिज्योतिर्नीरदावलिसन्निभः(भासुरः) ।
तन्नीलजातरुद्राणां विग्रहैर्वृषभैर्वृतः ॥
लवणाम्भोधिकल्लोलघर्घरानिलघोषितः ॥
तत्र नानामहाभोगफणारत्नालयो महान् ।
सौधान्तरस्य पीठस्थो भ्रुकुटीकुटिलाननः ।
उच्चण्डतर कोदण्डखण्डितारातिमण्डलः ॥
जटामण्डलकोद्भासि सुधामण्डल शेखरः ।
विद्युल्लतेवं घनवद्दंष्ट्राशोभितवक्त्रकः ॥
नीलामलतनूभास्वद्भसितालेपसुन्दरः ।
सजलोद्दामघनगगर्भान्तरसुविद्युता ॥
सदृशामलपुण्ड्राङ्कस्तिलकाकल्पभूषितः ।
धनुर्हेतीधरस्ताद्दग्गणपैरभितो वृतः ॥
प्रसन्नकरसङ्काशदोर्दण्डवरचण्डकैः ।
ब्रह्माण्डस्फोटनारावैः कोदण्डवरमण्डितैः ।
अघोरो घोरवदनः पातितां दक्षिणां दिशम् ।
चण्डाज्ञानतमोच्चण्डखण्डने मण्डितालकः ।
अघोरेशं महालिङ्गं सम्पूज्य(स्तौति)भक्तितः ॥

अघोरः–

सज्जन्निर्जरराजराजमकुटीनीराजनभ्राजिप-
द्राजीवं जगदार्तिभञ्जनमजं जेतारमाजौ पुर(रा)म्

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

आसाम्राज्यमिहैव जीवितनये सायुज्यमेवेज्यया ।
दातारं भज धूर्जटिं हृदय मे जह्नुकन्याभुजङ्गम् ।

अनिकटगम् अकपटगिराम्
अहिकटकं नटनलम्पटं खपटम् ॥
अघपटलीपाटपटुं
हाटकगोधारिधारिणं वन्दे ॥

स्कन्दः—

प्रतीच्यामपि तत्रास्ति प्राकारः पुष्परागजः ।
पुष्परागमणिज्योतिर्विभासितदिगन्तरः ।
तन्मणीन्द्रकृतानेकरुद्रकीडादिविग्रहैः ।
वृषभैस्तादृशैरेव गोपुराग्रप्रकल्पितैः ।
गोपुरैःभूधराकारै राजत्कलशसुन्दरैः ।
तत्रास्ति भवनं पुण्यं नानामणिविराजितम् ॥
वेदिकापङ्क्तिकोपेतं सिह्मासनवरैर्युतम् ।
सद्योजातं सुखासीनं क्षारसारविभूषितम् ।
पूर्वजातनिशानाथभासुराङ्गमनोहरम् ।
राजत्पिङ्गामलजटाकृतापीडनिशीश्वरम्(निशाकरम्) ।
उडुनायकसंशोभिफालानलविलोचनम् ।
प्रचण्डतरमार्ताण्डमण्डलोत्तमभूषितम् ।
नीलेन्दीवरसङ्काशग्रीवावलयसुन्दरम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पुष्परागकृतानेकमालाकलितकन्धरम् ॥
वैयाघ्रचर्मविलसत्कटीरत्नसुकाञ्चिकम् ।
दधिमण्डमहाम्भोधिमध्यसौधवराश्रयम् ।
अहिमन्युवरानेकतादृशैर्गणपैर्वृतम् ।
पाशाङ्कुशाभयकरं पाशिना परिषेवितम् ।
गणैश्चापि महोद्दण्डडिम्भारावविभीषणैः ।
सेवितं पाशिभिस्तत्र पश्चिमां प्रति तां दिशम् ।
सद्योजातेश्वरं लिङ्गं स्तौति भक्त्या प्रपूजयन् ।

सद्योजात उवाच–

पाटीरद्रुमकीटकेतन जटाकोटीरभागेरट –
त्स्पाटोच्चैस्तटिनीस्यदार्भटतटज्जूटीकृताहिच्छट ।
घोटाकृत्रिम गोकटीतट पटीभूतेभचर्माम्बर
क्षोणीरुण्णिकटाटखाटविटपिन् मच्चित्ततट्यामट ॥
वतंसितसुधाकरं वरगुणौघरत्नाकरं
स्फुरन्निटिललोचनज्वलनदग्धमीनध्वजम् ।
कुलाचलकुमारिकाकुचतटीपटीराङ्कितं
भजामि भजतां सदाभयदमीश्वरं शङ्करम् ॥

स्कन्दः–

इति स्तौति सदा लिङ्गं सद्योजातो महेश्वरम् ।
तदुत्तरेऽपि प्राकारो गोमेधमणिकल्पितः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

घृतोदेनावृतस्तत्र तत्कल्लोलोत्त्थवायुभिः ।
परिवीतो गोपुरैश्च तन्मणीन्द्रकृतैः शुभैः ॥
वररुद्रावतारैश्च(रोद्यद)विग्रहैर्वृषभैर्युतम् ।
शोभितं तत्प्रभाभिश्च तत्रास्थानं च तस्य हि ।
सौधैरपारशिखरैर्बहुस्तम्भविराजितैः ।
तत्र संस्थं महाबाहुं वामदेवं त्रिलोचनम् ।
सिह्मासने सुखासीनं भस्मोद्धूलनपाण्डरम् ।
हरिन्मणिनिभाकारं विद्युन्निभजटाधरम् ।
त्रिपुण्ड्राङ्कितसत्फालं खड्गखेटधरं शुभम् ।
प्रसन्नास्यं नीलकण्ठं राजदिन्दुकलाधरम् ।
हरितैर्गणपैश्चैव वायुभिःपरिषेवितम् ॥
उद्यन्मरतकीगर्भसुन्दरैर्वायुवेगितैः ।
त्रिपुण्ड्रचन्द्रार्धधरैः जटामण्डलमस्तकैः ।
बाणबाणासनधरैर्हल्लकाभूषभूषितैः ।
वल्लकीमुरजोत्तुङ्गमृदङ्गवरवादकैः ।
सेवितं परितो वीरैःशूलामललसत्करैः ।
वामदेवं सामजाताजिनबद्धकटीतटम् ।
कठोरभुजयुक्ताङ्गं मृगेन्द्रामललोचनम्

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कण्ठे भुजङ्गसंयुक्तं मृगेन्द्रामललोचनम् ।

कुबेरेणोत्तरां पाति दिशं यक्षेश्वरावृताम् ।

वामदेवेश्वरं लिङ्गं पूज्य संस्तुवनिशम् ।(सम्पूज्यास्तौन्महेश्वरम्)

वामदेवः

तिष्ठन्ते स्तुतिपाठने तव विभो निष्ठ्यूतनिष्ठीवव —

च्छाठ्यं निष्ठुरतां विधूय मनसा ब्रह्मैकनिष्ठाः कति ।

वैकुण्ठार्चितरत्नपीठनिलय श्रीकण्ठकण्ठोल्लस —

न्नीलज्येष्ठकनिष्ठकुष्ठहनन श्रेष्ठान्तरातिष्ठ मे ॥

सुरकुवलयसोमं वामदेवाख्यसाम-

स्तुतमखिलगुणानां सीमधामानमीशम् ॥

जगदवनविनाशं शाम्भवोद्यत्सुकामं

निजनयनकटाक्षैर्दग्धकामंभजेऽहम् ॥

स्कन्दः

एवं स्तौति महादेवं वामदेवः प्रसन्नधीः ।

तदन्तरा गिरेर्मूर्ध्नि संस्थो हीरकसौधकः ।

रुद्रावतारप्रभवैर्विग्रहैर्वृषभैरपि ॥

उरगेन्द्रमहासारो मध्यन्दिनरविप्रभः ।

शर्वरीशानमकुटी भूतिभूषितविग्रहः ॥

गजेन्द्रचर्मवसनो हीरमालावृताङ्गकः ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

आन्तरिक्षै रुद्रगणैः पाति व्योममनोहरम् ।
निषङ्गिभिः कवचिभिश्छुरिकाहेतिधारिभिः ।
व्योमकेशप्रसादेन ईशानो ईशिता सताम् ।
ईशानेशं महालिङ्गं संपूज्य स्तौति भक्तितः ।

ईशान उवाच–

रथन्तररविप्रियं रथरथाङ्गपाणीशरं
मनोरथपथातिगं सुरथनागसत्कङ्कणम् ।
भगीरथरथानुगाविहितजह्नुकन्याजटं
भजामि सुरगोरथं प्रियमपारपापापहम् ॥

चकषे(चषके)निजवाजिहेषितै-
श्चरणे वायुसुभोजिशिञ्जितैः ।
कटिसीम्नि सुभूरिबृंहितै–
र्मुखरं दैवतमाविरस्तु चित्ते ॥

अश्वीकृतस्वीकृतवेदराशि–
र्नाङ्गीकृताङ्गीकृतशाम्बरारिः ।
अस्त्रीकृतस्त्रीकृतदानवारि–
र्देवः सदा मे हृदये चकास्ति ॥

एवं स्तौति सदेशानो वररुद्रगणावृतः ।
आन्तराः परिघाश्चैव प्राकारवरगोपुरम् ।
महाकैलासभवने मणिकल्पितमुत्तमम् ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

रत्नप्राकारमेतद्धि पञ्चब्रह्मप्रकल्पितम् ।
महेशेन तदा विप्र शृण्वतामघनाशनम् ।

**स्कन्द उवाच–**

विचित्रं शिवनिर्माणं विचित्रं शिवचेष्टितम् ।
विचित्रा शिवमाया सा महामायस्य शूलिनः ।

यस्यांशलेशलवलेशशतांशलेश–
लेशैर्जगज्जननकर्मगतिप्रणाशम् ,
कुर्वन्ति वामभुजभूर्मधुकैटभारि –
र्दक्षाङ्गनेत्रजननौ भवतां हराजौ ॥

क्वचित्कल्पे स्रष्टा हरविधिमुकुन्दाः प्रतिभुवः
क्वचिद्ब्रह्मा विष्णुःक्वचिदपि च रुद्रोऽपि करणम् ।
जगत्संस्थानाशप्रकृतिजगुणैर्नैव करणा
भजन्तश्चान्योन्यं जनक जननाः शम्भुकृपया ॥
मनोवाचां चक्षुर्विषयमपि नो तस्य चरितं
शिवस्यैता लीलाः प्रथितवितता जागतगताः ।
स्वतन्त्रोऽयं शम्भुः गुणगणविहीनोऽपि सगुणः
स्वया शक्त्या चित्रं विदधति गिरीशोऽद्य जगति ॥

*इति श्री शिवरहस्ये प्रथमांशे पञ्चब्रह्म –*
*प्राकार वर्णनं नाम षोडशोऽध्यायः ॥*

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## सप्तदशोऽध्यायः

**स्कन्द उवाच**

तदन्तरेऽपि प्राकारश्चन्द्रकान्तशिलामलः
कलधौतमहासानुशिखरोपरि संस्थितः ।
पञ्चलक्षप्रमाणेन चायामेनोच्छ्रयेण च ।
परिणाहेऽपि विप्रेन्द्र परिवर्तोज्ज्वलप्रभः ।
कनकामलकुम्भाग्रो रत्नभ्राजन्मणिप्रभः ।
सुधाब्धिजलकल्लोलविलसत्पादपीठकः ।
चतुर्दिक्षु महाद्वारगोपुरोत्तमशेखरः ।
सोमधामायुतोद्भासि(सी)चाकचक्यकृतान्तरः ।
जगच्चक्र महाबिम्ब बिम्बितान्तरसुन्दरः ।
तत्कान्तकान्तिधाराभिः दिशोऽपि धवलीकृताः ।
उद्यत्सुधांशुकिरणनिसृष्टोत्सृष्टनीरकः ।
सुधातरङ्गनित्योर्ध्वहासफेनोपमोऽमलः ।
कैलासाचलसर्वस्वसारभूतोऽयमुत्तमः ।
धवलिम्ना तु ये लोके पादपाः सन्ति वर्णिने ।
तेषामंप्यतिधावल्यानुपमः स द्विजोत्तम ।
तत्प्राकारमहामौलौ स्फटिकोपलनिर्मिताः ।
वृषभा नीलनयनाः पुच्छे शृङ्गे विभूषिताः ।
कुरुविन्दोल्लसज्जिह्वाः ककुदाभोगभासुराः ।

9 CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कर्णाग्रलम्बितात्यच्छस्फुरच्चामरपङ्क्तयः ।
केचिदानन्दभरिताः पश्यन्त्यन्योन्यमीक्षणैः ।
केचिदाताम्रनेत्रान्ताः सुरघदृमहोपलाः ।
प्रवालमणिक्लृप्तेन नन्दिना(लम्बिना)वृषणेन च ।
नर्दन्ति घनसन्नाहध्वनिभिर्जितदिङ्मुखाः ।
एवं तत्र महासौधप्राकारवरसंस्थिताः ।
कल्पकानां वनं तत्र छद्पुष्पफलावृतम् ।
नानापलाशकलितं राजद्रामण्यवेदिकम् ।
तत्र तत्सुमगन्धोद्यद्बन्धुरामलमारुतम् ।
घ्राणतर्पणमत्यन्तं शीतासारविसारिणम् ।
वसन्तप्रमुखानेकैः;ऋतुभिः परिशोभितम् ।
कामादिकप्रदं तत्र तत्कल्पककुलं महत् ।
मन्दारपारिजातैश्च सन्तानैश्चन्दनैर्वृतम् ।
नयनानन्दजनमं तापत्रितयवारकम् ।
तत्कैलासमहापारसारभूतं मनोहरम् ।
हरिन्मणिनिभं स्वच्छच्छत्रछायासमप्रभम् ।
तत्सुमप्रभवामोदघुमुग्घुमितमारुतम् ।
विष्णुब्रह्मामरेन्द्राद्या मुनयश्च गणाः सुराः ।
तृप्तान्तराः प्रमुदिता नेच्छन्त्येव हि नन्दनम् ।
तत्सुखांशशतांशांशशतकं तत्र नास्ति हि ।
इत्यन्योन्यं संवदन्ति कथं तत्राप्यते वनम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

केवलं श्रीमहेशस्य प्रसादेन विना द्विज ।
नास्माकं प्रसरस्तत्र इति विस्मायितान्तराः ।
तत्रोत्फुल्लमहारत्नसोपानावलिभासुराः ।
स्वच्छाच्छस्फटिकाकारपानीयोत्तमसंवृताः ।
सुवर्णमृदुलालोलमृणालोच्छ्रितकुड्मलैः ।
रत्नकल्हारकञ्जैश्च कुमुदैश्चैव शोभिताः ।
उत्फुल्लारक्तकमलसहस्रदलसंवृताः ।
हरिन्मणीन्द्रविततहरिच्छदवरैर्युताः ।
तत्पत्रविलसन्नील(र)बिन्दुमुक्ताफलोपमाः ।
तत्पङ्कजरजःपुञ्जरञ्जिता मन्दमारुताः ॥
तद्गन्धमधुरामोदविसर्पितदिगन्तराः ।
नीरतीरजवल्योऽपि वितताास्तत्र शाङ्कर ॥
इन्द्रनीलकृतानेककलिकोद्दामकेसरैः ।
वेल्लिताकीलितापारनीलेन्दीवरभासुराः ।
विकचत्कुमुदासारकेसरच्छदसंवृताः ।
कासारसारसरसचलनाच्चलपत्रकाः ।
उद्यत्सुपुण्डरीकाक्षतुच्छीकृतसुधावलिः ।
सन्त्यक्तनीरजदलस्वच्छशारदवत् स्थितः ।
तस्यान्ते रत्नविलसत्पद्मरागमणिद्युतिः ।
प्रासादश्रृङ्गसाहस्रैःपरितःसरसस्तदा ।
विचित्रापारसद्रत्नस्तम्भपङ्क्तिविराजितः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तद्विद्रुमलताजालस्तम्भविद्रुमपुत्रिकः ।
गोपानसीगतापारगवाक्षोज्ज्वलकुम्भकः ।
राजत्सुरत्नकलशप्रभाकीलितदिङ्मुखः ।
उद्यद्भानुसहस्राभः किञ्जल्काकृतिभासुरः ।
किञ्चि(क्वचि) न्मञ्चा रत्नपादा मूलके विद्रुमान्विताः ।
स्फटिकोपलसङ्क्लृप्ततलादिविततः शुभाः ।
हरिन्मणितलाश्चापि कुरुविन्दतलामलाः ।
इन्द्रनीलमणिक्लृप्तमहापीठमनोहराः ।
मुक्तावितानकलिता मणिलम्बितशृङ्खलाः ।
मञ्चा मनोज्ञा रुचिरा सोपधानोपशोभिताः ।
पुष्परागकगोमेदवैडूर्यतलकान्तिभिः ।
भान्ति तत्र महापीठा विद्युदुद्यत्प्रभायुताः ।
क्वचिन्निम्नभ्रमास्तत्र पतन्ति प्रसभं गणाः ।
उन्नतेषु प्रदेशेषु निम्नभ्रान्तिकराः सदा ।
स्थले जलभ्रमं चापि जले तत्र स्थलाभ्रमः ।
नानारत्नपतत्पत्रशुकशारिकरान्वितः ।
रत्नपञ्जरमध्यस्थशुकशारिकपङ्क्तिभिः ।
क्रीडामयूरावलिभिर्लम्बिपिञ्छैकभासुरः ।
तत्र पक्षिगणारावः शिव शङ्कर पाहि नः ।
धूपधूममहागन्धबन्धुरामलमारुतः ।
मणिप्रभाभिः सततं सोमसूर्यौ तिरस्कृतौ ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सरसीमध्यसङ्क्लृप्तसौधोद्यद्वरकुम्भकः ।
मणिस्तम्भकृतासारभाभासितदिगन्तरः
सुवर्णाम्बरसङ्क्लृप्तविततामलमौक्तिकैः ।
जालिकापालिकापारवितानावलिभासुरः ।
तन्मध्ये हीरकोत्तुङ्गसिंहासनवराश्रितः ।
तत्र देव्या महादेवो विहारशयनासनैः ।
सरः प्रान्तोरुकलशधारासारोर्ध्वशीकरैः ।
यन्नीरतीरगन्धोद्यद्धारासारङ्ग(रौघ)शीकरैः ।
कदाचित्तत्र मध्यस्थो देव्या व्यजनहस्तया ।
सेवितः श्रीमहेशानः क्वचित् पीठस्थितः शिवः ॥
तत्र नानाविधाः क्रीडा देव्या चक्रे महेश्वरः ॥
विचित्राणां चरित्राणां त्रिणेत्रप्रियकाम्यया ।
देव्या प्रमुदितो देवस्तत्र सौधवरेषु च
काश्चित्तत्र वदाम्यद्य श्रृणु भूसुर शाम्भव ।
विपिने सरसस्तीरे प्रासादाग्रेषु गोपुरे ।
विजहार महादेवो भवान्या शङ्करस्तथा(दा) ।
शैलमालोकयद्देवो देव्या देवीसखीगणैः ।
अदर्शयद्विचित्राणि तस्मिन् कैलासपर्वते ।

सालतालकृतमालतमालै—
    रामलक्यवकुलार्जुनपाटलैः ॥
पानसैर्लिकुचवाह्लिकनीपै—

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

दाडिमैश्च सुरसालरसालैः ।

जम्बू निम्बकदम्बवञ्जुलमहातक्कोलहिन्तालकै–

रङ्कोलैः सरलैरशोकतिलकैस्तिन्दूकमालूरकैः ।

पुन्नागैर्नगनागसर्जरसिकैश्चाम्पेयमाधूककैः

प्लक्षाश्वत्थकपित्थतिन्त्रिणिभवैर्भूनिम्बजालैर्धवैः ।

क(व)टकुटजकुरण्टैः कर्णिकाराश्वसारैः

खरबदरपलाशैर्लोध्रसच्चन्दनैश्च ।

कुरवक शुकतुण्डैःशिंशुपाचेङ्गुदीभि–

र्लिकुचविकचभण्डैःकेतकैःसिन्धुवारैः ॥

केदारकोविदारैश्च देवदारुकपित्थकैः ।

तगरागरु कृष्णाभ्रतुङ्ग नीपककम्रकैः ।

मन्दारद्वयपारिजातवकजैरर्कैश्च सप्तच्छदैः

पूगीनागरखर्जुरैश्च कुटजैर्नारङ्गजाती(नि)द्रुमैः ।

प्लक्षोदुम्बरकुद्दलैर्मुनिभवै राजादनैर्बर्बरैः

शाल्मल्यैर्वरशिग्रुकैर्मधुभवैःसन्मातुलिङ्गैरपि ॥

भूतावास हरीतकीत्रिकटुकैःशम्युद्भवैःकिन्दरैः

प्राचीनामलकैःकरञ्जककुभैर्गन्धाक्तजम्बूफलैः ।

बन्धूकैश्चिरबिल्वजैश्च तरगैःकृष्णागरूत्थद्रुमै-

र्मालिङ्गैश्च शिरीषकैःकुसुमितैरन्यैश्च शाखीशतैः ।

मल्लीमालतिजातिकासुरभितैःसायन्तनोन्निद्रितै–

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्चन्द्रासारविकासितैररविसितैःसच्चन्द्रिकावल्लिभिः ।
वल्लीनां निवहैःकदम्बजरजःसन्दोहगन्धानिलैः
उत्फुल्लैस्तिलकैस्तमालजसुमैःफुल्लैलसत्केतकैः ॥
कुन्दैरिन्दु कर प्रसारित मुखैरलोलसप्तच्छदैः
कौसुम्भैररुणप्रभासुमधुरैःप्रोद्भूत सत्केसरैः ।
द्राक्षागुच्छसुवल्लिकासितसितापुण्ड्रेक्षु साराकराः
पूगद्रूकवलीकृताङ्गमधुराःसन्नागवल्लीलताः ॥

मन्दार सुन्दरतरुप्रकरैःप्रफुल्लै-
रुत्पुल्लदाडिमसुमैर्बककर्णिकारैः ।
पीतायमानसुषमायुतचम्पकैस्तै-
रुत्फुल्लपाटलकदम्बज राजवृक्षैः ॥
सत्किंशुकैः शुकमुखैर्वरशाल्मलीभिः
पुन्नाग नागनवनीपसुमैः प्रफुल्लैः ।
भारातिभारशिखरैःकलधूतशैलः
पश्याम्बिकेऽद्य सुमनोहरवृक्षसङ्घैः ॥
वल्लीविकासिततनुःप्रसभं भवानि
प्रोद्यत्सुधांशुचयकोटिनिभो विभाति ।
उत्फुल्लामल पुण्डरीक कुमुदैर्नीलोत्पलैःसुन्दरै-
रारक्ताम्बुजकञ्जनीभिरभितःसद्रत्नसोपानकैः ।
तत्रान्तामलबिल्वमूलजमहालिङ्गाकृतिःशङ्कर —
स्तुष्यत्येव सरस्सु रुद्रगणपैर्देव्या गिरीन्द्रेऽधिकम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तद्ध्यानधारामृतपानपीनाः-
स्वात्मैकताना इव चक्रवाकाः ।
सरस्सु कल्लोलच(ज)लात्तपक्षा
हंसा बकाःसारसपङ्क्तयश्च ॥
नार्द्रीकृताङ्गाःखलु सञ्चरन्ति
भावा भवाब्धाविव मे प्रभावात् ।
कपिवरकुलमाद्यच्चालनालोकनाद्यैः
फलपतनजवर्षैःपुष्परेणुप्रकीर्णैः ।
शिखरि शिखरसारा भूमयःशोशुभन्ते
करिकटमदधाराप्रस्रवैःपङ्किलाश्च ॥
शुकबकपिक काक कोकधूकै-
र्निभृतविनादित चक्रवाकपाकैः ।
गिरिवर शिखराग्रे नृत्तसाटोप बर्हा-
हरिकुलकृतघोषैर्बृंहितैर्वारणानाम् ।
गिरिशिरसि निनादैः सारसानां शुकानां
पिकरवकलकण्ठैर्नादितं तद्गुहान्तः ॥
महिष चमरकुञ्जदन्तश्रृङ्गैः
खर खुरघट्टन शैलसानु निम्नः ।
सुमनजगतवायुबन्धुरानुमोद -
द्रुमरजझंङ्कृतिद्रोणिलम्बिक्षौद्रः ॥
फलकुलसुमभारैर्दोर्घितानम्रशाखा-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

व्रजदलिकुलमालानील नीलाब्जतुल्याः ।

मधुररससुपेशीलम्ब हस्ताग्रशाखा-

हरगिरिवरमौलौ भान्ति सौवर्णवृक्षाः ।

कल धौतनख प्रशस्तमुस्ता-

पुलकाम्रेडित कोलजालमेतत् ।

शितदंष्ट्रोत्थितघोण घर्घरोरुरावं

परिपश्य प्रसभं मुदा गिरीन्द्रजाते ।

हरिखर नखरैर्विदारितोद्य — ॥

द्धरि(त्करि)कुम्भोद्यतरक्तयुक्तमुक्ता —

मणिजालावृतभूमिभागमेतत् ॥

द्विपकुलमिदमत्युदारघोषं

हरिणैर्धावति सिह्मनादभीतम् ।

वल्मीकोर्ध्वफणं फणीश्वरकुलं वातोत्थदिक्चक्रकं

आर्तत्रस्तविलोचनं हरिवरैर्भीत्या प्रसूतं शिशुम् ।

त्यक्त्वा धावति पश्य पश्य गिरिजे प्रोड्डीनमेणीकुलम् ॥

कैलासाचलरत्नसौधगमहासिह्मासनाध्यासितो

देव्युत्फुल्लमुखारविन्दविगलन्माध्वीकसारं मधु ॥

पीत्वा लोचनषट्पदैर्वदति तां पश्येति लिङ्गान्युमे

बिल्वीकोमलपल्लवैरनुदिनं कैलासशृङ्गेऽर्चितम् ॥

पश्याम्बिके मदनमत्तमयूरपिञ्छै-

स्सञ्छादितानि चमरीगणपुच्छभारैः ।

संवीजितानि करविस्तृत कर्णतालै —

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्सिक्तानि तद्वनगवां पयसैव नित्यम् ॥

सङ्घर्षणान्मृगकरीन्द्र ज(सु)देहभारै –

बिल्वच्छदैःपतनतः परिपूजितानि ॥

स्कन्द उवाच–

गौरीयल्लकभल्लशौरिरुरगोऽसच्छिञ्जिनी ते नगो

लीलाकार्मुकतां दधाति भगवन् भिल्लाकृते तेऽधुना ।

वेदास्ते तुरगा विधिर्नियतिकृत् विश्वेश विश्वाधिक

त्वल्लीलाधिगमेन सर्वजगतां नाशप्रभावस्थितिः ॥

वीक्षाशिक्षितमन्मथत्रिपुरक दक्षादिदीक्षापह

त्र्यक्षाक्षादिविदूर भिक्षितमहामौनीन्द्रविज्ञानद ।

ईक्षाभोजनपक्षापात दयया कक्षाधिवासाव माम् ॥

*इति श्री शिवरहस्ये प्रथमांशे कैलास प्रासादवर्णनं नाम सप्तदशोऽध्यायः*

## ॥ अष्टादशोऽध्यायः ॥

स्कन्द उवाच–

हीराकार महासौधे घर्मतप्तो हि शङ्करः ।

देव्या सरस्तटे दिव्ये सिह्मासनवरे स्थितः

सुचन्द्रचन्दनद्रावविलेपितमहाङ्गकः ।

महागरुमहाधूपविधूपित शिखस्तदा ॥

महापात्रस्थितापार महामोदान्तभोजनः ।

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ततोऽपि कल्पकफलं देव्या भुक्तं महेश्वरः ।
सुरत्नखचितानेक रत्नपात्रस्थितान् फलान् ।
दृष्ट्वा तुष्यति देवेशः कदाचिदमृताशनः ।
रत्नादर्श विलोकाच्छप्रतिबिम्बैकदर्शनः ।
देव्या ललाटफलके तिलकं रत्ननिर्मितम् ।
कल्पयत्यतिहृष्टात्मा सदानन्दघनः शिवः ।
पाटीर चन्द्रकस्तूरीलिप्तं मलयपङ्कजम् ।
देवीं विलेप्य संहृष्टः स्वाङ्गमीशोऽति हर्षितः ।
देव्या धम्मिल्लमल्लीनां घ्राणानन्दकुतूहलः ।
कल्पकामोदबहुलपुष्पस्रग्भिश्च भूषणैः ।
त्यक्त्वा कपर्दमकुटं रत्नकल्पितमुत्तम् ।
धारयत्यतिसंहृष्टः चन्द्रद्वन्द्वं महेश्वरः
हारकेयूरवलयैर्भूषणैःस्वाङ्ग मप्युमा ॥
काकोदरमहारत्नं त्यक्त्वा रत्नप्रभाधिकम् ।
नवरत्नमहाहारावलीलम्बितमौक्तिकैः ।
स्वकण्ठं कीलयत्येव देव्याःकण्ठेऽपि शङ्करः ।
शितिकण्ठो विरूपाक्षो देव्या क्रीडति तत्र हि ।
तयोः सङ्क्रीडतोस्तत्र ब्रह्मकल्पशतं गतम् ।
भूतं भावि भवत्तत्र कालकल्पं द्विजोत्तमाः ।
कालातीतस्य देवस्य सदामृत्युञ्जयस्य च ।
तस्य क्षणार्धं ताःक्रीडाःकेन वक्तुं हि पार्यते ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्कन्द उवाच–

धारासारगृहेषु शङ्खमुरजोद्घुष्टेषु तुष्टःशिवः
चन्द्रोशीरसुगन्धबन्धुरजलैः सत्पाटलामोदितैः ।
लालाटोत्थहुताशसूर्यकिरणैःसन्तप्तगात्रोऽम्बया
लीलालालितरत्नकीरकरया चास्ते च सिंह्वासने ॥
हीरराग(गार)निबद्धरत्नज महाडोलासनाडोलनै–
रत्नश्वेतजकान्तिबृन्दनिवहैस्तत्स्फीतवातोत्थितैः ।
सूक्ष्मैरम्बरकान्तिभिर्विकसितैःसच्छैल सानुप्रभैः
अम्बामीक्षति लोकयेति ससुधाकल्लोलवारांनिधिः ॥

ईश्वरः–

मणिद्वीपनीपान् प्रपश्याम्बिके त्वं
तवापारमोदप्रदा सा च भूमिः ।
सुधासिन्धुकल्लोल शीतातिवातो
महानन्दकन्दं विधत्ते महेशि ॥
हरिन्मणिनिभेऽद्रिजे तव शरीर कान्त्याधिकं
समस्तकलधौतजोऽप्यगवरोऽयमप्युन्नतः ।
विभाति हरितप्रभः समृगपक्षिवल्लीद्रुमः
प्रपश्य मुकुरेऽम्बिके तव सरूपभाग्याधिकः ।
मन्मौलिस्थितचन्द्रकान्ति निकरैःकान्त्या स्वया शैलराट्
स्वाम्या( ?)पारशिखाभिनृत्तशिखिभिःपुंस्कोकिलानां रवैः ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सारङ्गैरुरगै(रुरुकैः)र्वृकैश्चमरिभिः प्रोद्धूतपुच्छैःसदा
खड्गानां निवहैर्लुलायजकुलैःप्रोड्डीनमे(दे)णीकुलैः ।
हरितमणितृणाग्रं सञ्चरन्तश्चरन्ति
कनकमयमृगास्ते मुक्तबिन्दूचिताङ्गाः ।
रजतनिभकपोता रत्नपादाःकणाशाः
स्वकगलरणितैस्ते स्वप्रियापृष्ठलग्नाः ॥
हंसानां च कुलं स्ववक्त्रजमहामुक्ताफलैः पक्षति-
व्याधूनात्त दिगन्त कान्तिबहलास्ते स्वच्छदेहामलाः ।
क्रीडन्ति प्रसभं प्रभूतपयसि प्रोत्फुल्लरक्ताब्जिनी-
मध्यस्था इव चक्रवाकजकुलं मौनं विधत्ते शिवे ॥
सुखयति मृदुवातोऽप्यत्रभीत्या ममाद्य
मृगमद सुमसंस्थैर्गन्धमाद्यत्परागैः ॥
कस्तूरीमृगका अपि द्रुततरं धावन्ति गन्धाशया
स्वस्याङ्गस्थितमप्युमे न हि तरां जानन्ति मूढा इव ।
देहेषु स्थितमप्युमे यमिसुरा जानन्ति नो मां यथा
तद्वत्तेऽपि मृगा विमूढमतयःकैलासशैले मम ॥

मृदुतरकेतकधूली-
पालीपिञ्जरितशैलवरसानुः ।
को नु सुखं न भजेत
ह्यत्रस्था दिविषदो हसन्त्येव ॥
हरिन्मणिनिभांशुका चंद(वद)नरत्नगोमेदकाः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सुरत्नमणिकल्पिताः कनकहीरनीलप्रभाः ।
वदन्ति नगमौलिगाः शिव शिव प्रभो पाहि नः
प्रकृष्टदयया दृशा प्रमथनाथ कष्टं हर ॥
सुशारिक सुकोकिला हर हरेश विश्वेश्वर
अनाथजनवत्सल पुरहर प्रपश्याद्य नः ।
इति ध्वनिकृतः सदा शिखरिशीर्ष जह्रूद्रताः

सुरत्नमणि सन्निभास्तरलकान्तरक्ताक्षकाः ।
पश्याद्रिजे किसलयं सुरसालजातं
पुंस्कोकिलाः स्वलपनेन तुदन्ति भुक्त्यै ॥
कीराननं परिपतन्त्यलयः प्रकामं
जम्बूफल भ्रमजितः शुक एष मूढः ॥
पलाशकलिकाभ्रमात् मधुपरागसौख्यादसौ
यथा विषयिणोऽम्बिके सुकृततर्षदुःखाकुलाः ॥
वृक्षालम्बितश्रृङ्खलासु चलिते वैडूर्यमञ्चे शिवः
तद्वत्पुष्पकराग कान्तिविलसन्मञ्चस्थिता साम्बिका ।
डोलाडोलनकैर्वने विहरतःस्वैरं शिवौ सुन्दरौ
देवीभिःकलितैःसुचामरगणैःसेव्यौ च वृत्तैरपि ॥

श्रीचन्दन प्रभवसारविलिप्तगात्रौ
चिक्रीडतुर्नगसुमोद्ध(द्धु)तवायुगन्धैः ।
नखमुखविघटित दाडिमी फलोद्य—
न्मणिनिभबीजवरं ददाति देवी ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्वकराम्बुजसंस्थ कीरवक्त्र-

च्छदनं वीक्ष्य महेशितुःसहासम् ॥

कीरोऽपि शङ्करमुखाब्जमवेक्ष्य देवी

नत्वा गिरा समभियाचत बालवाचा ।

देहीश शङ्कर विभो शशिखण्डचूड

माद्यद्रसालकदलीफलसारमम्बाम् ॥

आज्ञापयेति तव नाम वदामि शम्भो

विश्वेश मात्तुमिति तस्य गिरा सहासः ।

इन्द्रनीलमणिकल्पितसौधे

मञ्चसंस्तुतशशिद्युतिकान्ते ।

तल्पकेऽधिशयितस्य पुरारेः

पादपङ्कजयुगं स्वकराब्जैः ।

रङ्गमण्डलगता मुहुरम्बा

वीणया वदति शङ्करनाम ।

रत्नोत्थामलसौधभूमिषु पुरो देवस्य देव्याःपुरो
रुद्राण्यो नवयौवनोन्नतकुचाः क्रीडन्ति हल्लीसकैः ।
मल्लीगुच्छकचानताननकराःप्रोद्यज्झणन्नूपुराः
कैलासाचलमौलिगाः सुमधुरं गायन्ति नृत्यन्ति च ॥

रुद्राण्यः-

विश्वेश विश्वाधिक दीनबन्धो

पाहीश शङ्करविभो दययार्द्रदृष्ट्या ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पाहि प्रसीद मदमत्तमरालराज-

मातङ्गजेतृगमने जगतां जनित्रि ॥

स्कन्दः—

आसत्यलोकादपि शैलमौलौ

स्वशेखरापार त्विषा तिरस्कृतौ ।

तत्रस्थ एव प्रणमन्ति देवा-

स्तौ चन्द्रसूर्यौ गतिवर्जितौ भयात् ।

महेश्वरापारदयानिधानं

सुधाब्धिकल्लोलितपादपीठम् ।

समुल्लिखन्तं शिखरैरपारै-

र्लोकास्त्वहो तं कलधौतशैलम् ।

शोशुभ्येत सदैव तत्र न दिवा रात्रिर्महेशश्रयात्

नो गन्धर्वमरुद्गणा मुनिगणा नो ब्रह्मविष्ण्वप्सराः ।

(नो ब्रह्मविष्णू सुराः ।)

न वाति वायुः प्रसभं हि तत्र

तिग्मांशुशीतांशुरुभौ हि बिभ्यतः ।

अग्निर्न ईष्टे स्वावलीढं (न दृष्टःस्वशिखावलीढं)

कक्षेषु तत्कीचकवेणुरन्ध्रे ।

एको रुद्र इति श्रुतिस्तदितरो नास्त्येव तत्रागमे

देव्या दत्तकरःसदैव पशुपस्तत्रैव सञ्चार्यसौ ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पश्यन् लिङ्गकदम्बकं गिरिवरं फुल्लद्रुमाणां गणं
तत्रापारसुगोपुराङ्गणगतः स्वैरं मुदा शङ्करः ॥
तत्राकारवरैकरक्षणचणाः सन्त्येव कोट्यो गणाः
रुद्राण्यश्च चरन्ति तस्य सविधं नान्ये गणा वा सुराः ।
वातोऽपि न प्रचलति द्युमणेः कराश्च
सोमस्य सुन्दरकराः प्रभवन्ति नैव ॥

*इति श्रीशिवरहस्ये प्रथमांशे कैलासमौलिवर्णनं नामाष्टादशोऽध्यायः ॥*

## ॥ एकोनविंशोऽध्यायः ॥

स्कन्द उवाच–

तदन्तरास्ति प्राकारो वैडूर्यमणिकल्पितः ।
राजल्ललामवृषभैर्वैडूर्यमणिकल्पितैः ॥
तत्सूत्रसङ्क्रमात्कान्तिकाञ्चिताखिलपर्वतः ।
निष्टप्तरजतोद्भास्वत्तत्कान्त्या पीतवत्स्थितः ।
तत्र पुष्पवनं दिव्यं नानारत्नगणान्वितम् ।
नीलगोमेदहीरैश्च पुष्परागैःप्रवालकैः ।
कुरुविन्दैर्मरकतैर्मुक्ताभिरभिशोभितैः ।
नीलोत्पलामलजलं कासारमभितःस्थितम् ।
प्रवालैः स्तबकैश्चैव कलिकोत्फुल्लपुष्पकैः ।
तत्तद्द्रव्यैश्च सङ्क्लृप्तैरिन्द्रचापनिभप्रभैः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वितताच्छमणिभ्राजच्छाणोल्लीढकरप्रभैः ।
द्योभूमिसर्वलोकेषु तादृशं न वनं क्वचित् ।
सौन्दर्यसारसर्वस्वं रम्यं मञ्जुलमारुतम् ।
सुवर्णचम्पकोत्फुल्लधूलिकोद्यत्समीरणम् ।
तद्वातस्पर्शनेनापि ब्रह्मविष्णुमहेश्वराः ।
कृतकृत्या भवन्त्येव तदा धन्यतराः शुभाः ।
हरिन्मणिप्रभाकारैःकेक्यालम्बितत्सुमैः ।
प्रफुल्लतत्सुमामोदधूलिकेलिसुगन्धधृक् ।
पाटलामोदबहुलमिन्दीवर गणावृतम् ॥
बृहत्सारङ्ग सँल्लूननवशाद्वलसुन्दरम् ।
घासावृतेव भूर्भाति महामारकतोपलैः ।
स्वच्छन्दचमरीपुच्छैर्वीजनोड्डीनषट्पदैः ।
कर्णिकारैःस्वर्णवर्णैर्नभो भाति हिरण्मयम् ।
शुभ्राभ्रचयसङ्काशकाशमन्दारसंयुतम्
रक्ताच्छ मणिमन्दारफुल्लकोरककैःशुभैः ॥
तद्गन्धबन्धुरामोद शीत बन्धुरमारुतम् ।
तमाल सालजोद्दाम घर्घरारावभीषणम् ।
आरग्वध सुमालोल फुल्लमञ्जरिशोभितम् ।
शुकतुण्डप्रभास्वत्पलाशैर्गुच्छसुन्दरैः ।
फुल्लपुन्नागजैश्चैव सुमैस्तत्कोरकैरपि ॥
नभो विकीर्णताराभं भाति मुक्ता इवाधिकम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

देवदारुसुमैः फुल्लैः कदम्बालम्बिगुच्छकैः ॥
शेफालिगुच्छैरताम्रैः कुब्जाम्र निबिडच्छदैः ।
कुरवामोदवकुलमञ्जरीभिर्मनोहरम् ।
उद्यदिन्दुकरस्वच्छगुच्छैर्हल्लकसल्लकैः ।
भल्लभल्लातकोद्दाम पारिभद्रोद्भवैः सुमैः ।
तमाल पिप्पलीगुच्छ सुमामोदितमारुतम् ।
उग्रगन्धायित दिशासमूहैर्मधुकोद्भवैः ॥
एतत्सुमैश्च भूर्भाति तारा इव नभश्च्युताः ।
पुण्यक्षयादिवोत्तुङ्गा यथा सुकृतिनोऽफलाः ।
पनसोद्दाममूलस्थफलभारावनामितम् ।
सुवर्णकन्दुकाकारविलसल्लिकुचैरपि ।
सौरभामोद पक्वोद्यच्छलाटुकुलकैरपि ।
उत्तुङ्गमातुलुङ्गैश्च स्थूलनम्रोरुशाखकैः ।
रसगर्भरसालैश्च कम्रकाम्रककैः(जैः) फलैः ।
महानीलमणिप्रख्यैः जम्बुकारञ्जकैः वृतम् ।
आनम्र दाडिमोत्फुल्लसुमैः स्फुटित तत्सुमैः(फलैः) ॥
अङ्कोलक शिरीषाक्ष(षैश्चापि)अर्जुनभ्राजिगुच्छकैः ।
पक्व बिल्वफलामोद तत्सुमोद्बुद्धगन्धितम् ।
पतत्कपित्थनिवहैस्तथैवामलकादिभिः ।
नारङ्ग रञ्जितोत्तुङ्ग शाखिशाखाभिरन्वितम् ।
वादामाक्रूरखर्जूर तत्फलानम्रशाखकम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

जातीफलरसास्वाद माद्यत्कपि गणाकुलम् ।
रम्यतालीफलोद्भूत गन्धानन्दितमारुतम्
हरिद्दल प्रभात्यच्छ सुपीतकदलीफलैः ।
रम्य सप्तच्छदोपेतं नारेलफल गुच्छकैः ।
सितासित फलानम्रमारुतोद्धूत मौलिभिः ॥
उद्यद्द्युमणिगर्भाभपूगीफलभरैर्द्रुमैः ।
स्तबकानति सम्फुल्लराजत्कुटजपङ्क्तिभिः ।
कुटजैर्वटजैश्चैव कूटागारमिव स्थितम् ।
विभ्राजद्धवलाकार(त्यच्छ)बालार्कसुमकेसरम् ।
नीपानोकहजात्युच्चैरशोकैःशोकनाशकैः ।
प्रभातबुद्ध सद्बुद्धि(बोधि)द्रुमरवाण्डजैः ।
वकुलैर्धवकेलैश्च केसरामोदसुन्दरैः ।
तक्कोलाङ्कोलकैः शुभ्रैः सुगन्धिबदरीधवैः ।
सुगन्धाबद्धजम्बूकसुगन्धामोदमारुतम् ।
कन्दर्पवर्ष्मसङ्काश काश्मीरद्रुमकेसरैः ।
तगरामोद बहलं कृष्णागरुनगैर्युतम् ।
लोध्रवध्रजभेरुण्ड काण्डताण्डवगुच्छकम् ।
वटं तपस्यन्तमिव सटाजालाञ्चितं स्थितम् ।
खदिरैर्बदरैश्चैव प्रवाला इव तत्फलैः ।
कोविदारमहाशाखा विदारितनभोघटम् ॥
भल्लालिङ्गितसन्मल्ली सुमबन्धुरमारुतम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वेणुसङ्घर्षणरव वीणानादोपमं वने ।
सल्लकीसल्लयैर्युक्तं मल्लीवल्लीवृताङ्गकम् ।
हल्लीसल्लास्यं कुर्वन्तं शाखाभिः फुल्ल भल्लकम् ।
गन्धगन्धितदिक्चक्रं च(व)क्राङ्गं शाखिसुन्दरम् ।
वैकङ्कतं विकर्षन्तं नभोमण्डलगान् गृहान् ॥
उडुपोडुगणाकारं फुल्लं गलिततत्सुमम् ।
नल्वमात्र महाशाखं तद्दल विपिनं महत् ।
चन्दनैर्नयनानन्दि सुमगन्धि सुमारुतम् ।
आन्दोलितमहाशाखालम्बिताधोमुखस्रजम् ।
गुच्छगच्छदलिव्रातं सरसान्दोलसुन्दरम् ।
वनवाटी परिवृतं रत्नकान्तिझरीभरम् ।
तत्राच्छस्फटिकाकार राजज्जल तरङ्गकम् ।
वनसौरभ शीताच्छ शीकरासारमारुतम् ।
गन्धगन्धितपद्मोत्थरजःपटल सुन्दरम् ।
नीलनालीकसुभगं सरस्तत्र विराजते ।
रत्नसोपान सम्बद्ध चलदारक्तहारकम् ।
तन्मध्ये सौधशृङ्गाग्र कलशोज्ज्वलदीप्तिमत् ।
विद्रुमामल बिम्बोद्यत्कानकान्तरङ्गकम् ।
सहस्रस्तम्भ विततं पीठगोपानसीयुतम् ॥
राजत्प्रवालवृषभं दोधूयित पताककम् ।
तत्रोज्ज्वलमहारत्नवेदिका समलङ्कृते ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

इन्दुकान्तितिरस्कारि हीरधारासमावृते ।
सिंहासन वरे देव्या सहास्ते वृषभध्वजः ।
जिघ्रंस्तद्वनसम्फुल्ल सुमगन्धमनोहरम् ।
मरालकुलसञ्चारं सारसानां रवं हरः ।
देव्याः पश्यन्मुखाम्भोजं कालं नयति शङ्करः ।
तत्रैव रुद्रकोट्योऽपि शूलामललसत्कराः ।
प्राकारं परिरक्षन्ति बहिस्तत्रान्तरे तु न ।
तत्प्राकारं तद्वनं च नलिनीं तां च सुन्दराम् ।
ते रुद्रा देवदेवस्य चन्द्रचूडस्य शासनात् ॥

**ईश्वरः—**

गिरीन्द्रशिखरस्रुतैर्हरितपीतनीलारुणैः
स्रवज्झरिभरीभरैर्निखिलरीतिनिर्यासितैः ।
स्रवत्करटिकुम्भवत्पटु मदाम्भोऽयं गिरि—
स्तमालतिलकैर्धवैस्तिलकितो गिरिर्गैरिकैः ॥
नगेन्द्र वरवारण प्रति कृतैश्च सद्वारणै—
र्महिङ्गुद मनोहरोज्ज्वलित तेजवल्लीगणैः ।
विभाति मदशैलराट् गिरिवराङ्गकन्ये भज ॥
तद्बिल्वमूल परिकल्पित रत्नवेदि—
मध्यस्थरत्नकमलामल कर्णिकायाम्
दृष्ट्वा गिरीन्द्रतनयाञ्चितबाहुरीश —

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्चन्द्रोपलाकलिततलिङ्गवरेषु देव्या ॥
समर्चयति दूर्वया हरिमणिप्रभाभाऽधिक —
प्रकृष्टतरकान्तया द्युमणिबालकन्तिप्रभः ।
नवारुण सुबिल्वजैश्छदवरैर्मुहुःशङ्करः
फलैश्च रसगर्भितैर्विमल जम्बु नारङ्गकैः ।
सुदाडिम वरोद्भवैर्विदलित प्रभाभासुरैः
कपित्थ कदलीफलै रसरसालपक्वैः फलैः ।
निवेद्य गिरिजाकरे दधति रक्तकञ्चाधिके ।

स्कन्दः-

सरस्यो देवेशः प्रथितमहिमा वेदशिखरै —
र्नतानामुद्बोधे प्रकटकरणे वारणशिराः ।
प्रचण्डोच्चण्डाण्ड स्फुटन विधिजोद्दण्डकुहरो
हरोच्चण्डाखण्डप्रधनमुदितस्ताण्डवपरः ॥
मुकुन्दब्रह्मेन्द्रैरमरतिलकैः सेवितपदो
गणैश्चण्डीशाद्यैः सुरवरतुहण्डादिगणपैः ॥

*इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णनं*
*नाम एकोनविंशोऽध्यायः*

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ विंशोऽध्यायः ॥

**स्कन्द उवाच–**

तत्रान्तरे हि प्राकारे लक्षयोजनविस्तरः ।
हीरसारमहाधारातिरस्कृत शशिद्युतिः ।
कैलासाचलकान्त्या च तद्धीर प्रभयापि च ।
सुधाम्बुधिमहावीचीबिम्बितेन्दु करैरपि ॥
महेश मकुटोद्दाम चन्द्रास्फारकलादिभिः ।
भाभासितदिशांस्तोमस्तत्प्राकाराग्रशृङ्गकैः ।
चन्द्रसूर्यग्रहास्तारा विद्युतोऽप्यनलो द्विजाः ।
तिरस्कृतास्तत्प्रभाभिस्तद्गोपुरवराग्रगाः ।
महाहीरकसङ्क्लृप्ता नीलनेत्रा विषाणिनः ।
तदग्रगोपुरं शुभ्रं पञ्चलक्षप्रमाणकम् ।
आसप्तपाताल-तलादुत्थितं हीरकल्पितम् ॥
कपोतव्यालिपालीभिर्देव गोपविराजितम् ।
रुद्रावतारक्रीडाभिः कलशैर्वृषभैरपि ।
तस्मिन(न्नू)ध्र्वतले देव्या दिव्यसिंह्मासनाश्रयः ॥

**स्कन्द उवाच–**

कैलासशैलवरगोपुर हीर सौधैः(धे)–
दिव्यैरनेकमणिकल्पित विष्टरस्थः ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

देव्यै वदत्पशुपतिः सुमहच्च कालं
देवादिलोकमखिलं कथयत्युमायै ॥

**ईश्वरः–**

कैलासशैलशिखरस्थित दिव्यलिङ्ग–
सङ्ख्या हरीन्द्रविधिनाप्यहिनायकेन ।
गण्यन्त एव दिवि तारक पांसुजालं
धारापि वर्षजनिता श्रृणु शैलकन्ये ॥

लिङ्गानां कुलमेतदेव गिरिजे मन्दारमालार्चितं
बिल्वीकोमलपल्लवैरभिनवैर्दूर्वाङ्कुरैःशङ्करि ॥
काले पुण्यतमे प्रदोषसमये वीताघसङ्घे शिवे
कार्यं सर्वसुरासुरैरिति मया रत्नप्रभादीपितम् ।
कैलासाचल लिङ्गमण्डलमिदं भास्वज्जटामण्डलं
गङ्गातुङ्गतरङ्गशङ्कितमहाकाकोदराकल्पकम् ।
मन्दारद्रुम पुष्पसञ्चयमहाबिल्वादिमल्लीसुमैः
रत्नाकारसुकुम्भमध्यविलसन्मध्येऽर्चितं पश्य वै ॥
बिल्वानां मूलभागे विलसति मणिभिश्चन्दनैःशीतशीतैः
कर्पूरैश्च सुगन्धिते हरि गणैरामोदजिघ्रासुभिः ।
नित्यं वेष्टितमौलिभागममलैस्तच्छीतवाताशनैः-
सेव्योऽहं करुणापयोनिधिरुमे लोके स्वलिङ्गोच्चयम् ॥
स्वीयैर्मौलिशशाङ्कदीधितिचयैर्गाङ्गैरिवाम्भोधरैः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कूजत्कोकिल सद्विजैरिव महारुद्रादि सन्मन्त्रितैः ।
सर्वाङ्गेष्वभिषिक्तमैश्वर महालिङ्गं च तत्पत्रकैः
वातैरेव विलूनवृत्तपतितैः सम्पूजितं पश्य मे ।
एषामग्रभुवि प्रचण्डतरया प्रोच्चण्ड पिञ्छोत्थितै –
र्वातैरेव शिखण्डिमण्डलमिदं प्रोत्तुङ्ग(प्रोच्चण्ड)सत्ताण्डवम् ।
केकालापमनोहरं च विपिने सन्नर्तकीनां दशां
प्राप्यैवोद्गायतीव प्रथितबहुरसं पुण्यसङ्घैःकिलेदम् ।
अस्मिन्बिल्ववने नवारुणदलाक्रान्तोरुशाखान्विते
प्रच्छाये चमरीगणाः पतनतो भूत्यैव मूलं गताः ।
तत्रत्येषु पतत्पतन्ननिचयो(त्सङ्गाकुलत्पत्रकैः)
पुच्छैश्चामर पङ्क्ति(वच्छकलितैः)वीजन्ति लिङ्गान्युमे ॥
सन्तुष्टा भव शैलनन्दिनि शिवे नातःपरं विद्यते
मल्लिङ्गार्चनमेव साधनवरं मुक्तिप्रदं शाश्वतम् ।
किं यज्ञैरखिलव्रतादिचरणैः किं दानसङ्घैर्जपै–
रेतत्किं वितनोति मुक्तिरिति या सा धीर्हि दुःखात्मनाम् ।
उद्यद्बालदिवाकरेन्दुसदृशैः कैलासशृङ्गाग्रकैः
माणिक्यामलहीरकैश्च कलितैःसौधाग्रशृङ्गैः शिवे ।
तत्तल्लोक निवासिभिःसुरगणैःसञ्जात विस्मापकैः
नानासूर्यशशाङ्कसम्भवमहाकान्त्याधिकं शोभते ॥
कैलासाचलपादसानु शिखरे सत्यादि(धि)के म(मे)रुगाः
लोकालोकिन एव तत्र विहिता दिक्पालसङ्घाः शिवे ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ब्रह्माविष्णु हरामरेवरे(महेश्वरामरवराः)सप्तर्षयोऽमी ग्रहाः
उत्तानात्मज एव भाति(भान्ति) नितरां तारागणा राशयः ॥
तं मेरुं निरतो(परितो)भ्रमन्ति गिरिजे पश्याधुना सम्प्रति(सन्ततं)
तत्तद्गोपुरमध्यभागविलसत्तौर्यत्रिकाणां स्वनैः ।
तत्तत्कालशिवार्चनेषु कलितैः भेरीजशङ्खारवैः
कैलासोऽप्ययमीश्वरेश्वरि महासन्नाद नादान्तरः ।
मेघानां शतकैरपि प्रमुदितो घोषैकभूषामुखः ॥

वसुधाधरकन्दरान्तसंस्था
रदखण्डद्विरदाः किशोरसिह्माः ॥
स्वककन्धरकेसरैर्नगेन्द्रैः
परिणिन्दन्ति विदीप्तमित्युमेऽद्य ॥
रविरथतुरगोत्थहेषघोषं
परिशृण्वन्ति इमे हयारिसङ्घाः ।
विनतानन कर्णश्रृङ्ग नेत्रा-
स्तटिदुत्थाखिलघस्मरैकरावाः ।
खरखुरपरिघट्टनोत्थधूल्या
जलद निभं रविमम्बिकेऽद्य पश्य ॥
रविरपि स्वतनूजमुख्यवाहैः
गिरिसंस्थैरभिजात लज्जयेव ॥
प्रसभं मेघगणं विशीर्य हस्तै –
र्विजितोऽस्मीति दिशं प्रयाति यामीम् ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मदालयोऽयं कलधौतशैल–
स्तदग्रतो भाति सुवर्णशैलः ।
तदूर्ध्वमौलिस्थितलोकजालं
विलोकयाधो विहितं नगस्य मे ॥

ब्रह्माप्येष सृजत्यजस्रमखिलं लोकं हरिःपात्ययं
रुद्रः संहरतेऽनिशं सुरवरैर्दिक्पालसङ्घैःशिवे ॥
सत्यस्थो विधिरेष विष्णुभवनं वैकुण्ठमालोकया–
पीशानस्य पुरीयमद्रिवरजे चेन्द्रस्य चैषा पुरी ॥
एषा सम्यमिनीपुरी सुविहिता क्षीरोदधेः पारतो
गङ्गैषा सरितां वरा त्रिजगतां पापापहा मे पुरी ।
लिङ्गालङ्कृत कोटिकार्मुकनिभा वाराणसीज्या शिवे
विश्वेशाख्य महेश लिङ्गवरकं देव्यन्नपूर्ण्या त्वया ॥

सुरासुरा यत्र वसन्ति मुक्तये
वसन्त्यनिष्टं परिहाय मत्सरम् ।
यतो न मुक्तं हि मयाविमुक्तं
वदन्ति वेदा अपि तत्प्रभावम् ॥

गङ्गाद्वारमिदं पितुस्तव महामौलौ च केदारकं
चैषा सा बत पाटलीनगरगा मानसाद्याप्रसूता (यस्याःसुता मानसाः)
गङ्गासूर्यतनूजयोश्च विहितःसङ्गोऽत्र मुक्त्यै नृणां
स्नातानां च सदा सरित्पतिवरेणालिङ्गिता जाह्नवी ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

गङ्गासागरसङ्गमोऽत्र गिरिजे सोमेश्वरोऽयं सदा
सेव्यानां सफलं करोति च मनःसन्तापपापापहम् ॥

एष प्रयागःसकलापगाश्रयः
गङ्गापि यत्राम्बुजमित्रजायुता ।
तत्राप्लुतानां दिवि देवि वासो
विसर्जिताङ्गा यदि तेषु मुक्तिः ॥
सा ब्रह्मणो वेदिरनन्तपुण्यदा
गया पितॄणां प्रमुदे भवानि ॥ [तृ दीर्घम्]
पश्याद्य तत्रैव पदं मदीयं
सुरद्विजानां तु तथैव वैष्णवम् ।
तन्नैमिशं पुण्यतमं महर्षिभिः
समाकुलां तां बदरीं विलोकय ।
स चित्रकूटः सुरसङ्घसंवृतः
सप्तैव पुर्योऽत्र विमुक्तिहेतवः ॥

एतद्द्वादशलिङ्गसङ्घमगजे तत्तत्पुरीषु स्थितं
ओङ्कारो घुसृणीश्वरोऽयमगजे श्रीकामनाथाम्बिके ॥
असौ महाकालवरो महेशो
नागेश्वरो वेणुवनैकसंश्रयः ॥
एषा शर्मदनर्मदात्र कलिता लिङ्गैकसङ्घावृता
शोणोऽयं सरितां पतिं प्रवहते लिङ्गैकसङ्घाश्रयः ।
पुण्या बाहुनदीषु पुष्करमिदं पुण्यं प्रभासं त्विदं

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मल्लिङ्गमलपातकं गिरिवराज्जातेऽमरं कण्टकम् ।
श्रीरुद्रोऽमरकोटिरेष विहितःपिण्डारकं मन्त्रियं
चैतत्क्षेत्रवरं कुरु प्रभवजं विन्ध्योह्ययं शैलजे ॥
एष श्रीचन्द्रमौलिर्भवजनितमहापापसङ्घैक हर्तृ(र्ता) ।
चैषा त्र्यम्बक शैलजा सुविहिता गोदावरी निम्नगा ॥

तत्रान्तसंस्थो घटजो मुनीशो
मया पुरा प्रेषित एव विन्ध्यहृत् ।
पश्चादथाम्भोनिधि तीरसङ्गतं
गोकर्णमेतत् मम लिङ्गमम्बिके ॥
अरुन्धदेषोऽमरमार्गमम्बिके
प्रजात रोषः कनकाचलेन ॥
विन्ध्योऽप्ययं शैलवरस्त्वदाश्रयात्
पुण्यं प्रतिष्ठानगरं सुपुण्यदम् ।
कोलासुरेणात्र समीहिता पुरी
तपस्यया तस्य वधात्त्वया जिता ॥
एषोऽरुणाद्रिः प्रथितप्रभावो
वृद्धाद्रिरप्येष ममेष्टवासः ।
गोपर्वतश्चात्र विभाति शैलः
काञ्ची जगत्काङ्क्षितलिङ्गसंयुता ॥
त्वदाश्रयात्कान्ततमा च सैव
त्वदर्चनार्थं हरिणा च सेविता ।
शेषाचलस्त्वेश सुताश्रयो मम
तदुत्तरे भाति महेशि पश्य ।
(कैलास एषोऽभिमतो हि दक्षिणः
सह्याचलो ह्येष यतो मरुद्वृधा ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सह्यापगा तीरगलिङ्गमण्डलं
महाप्रभावं किल शैलकन्ये ।
कवेरकन्यागतलिङ्गसङ्घं
श्रीकण्ठरत्नाद्रिगमातृभूतम् ॥
तज्जम्बुलिङ्गं च हरिस्ततोऽपि
पञ्चापगेशाख्यमहो भवानि ॥
कुम्भेश्वरं लिङ्गमिदं मनोज्ञं
तदर्जुनं चापि मयूरलिङ्गम् ॥
श्वेतेश्वरं तत्प्रथितं विमुक्तिदं
तदुत्तरे यद्विरजं विशोकम् ।
हृत्पुण्डरीकं विमलं ममाश्रयं
यत्रैव मे नर्तनमम्बिके त्वया ।
सदैव दृष्टं प्रथिते प्रदोषे
क्षाराम्बुधेस्तीरगतं सुपुण्यदम्
वेदाख्यसत्काननमब्जसंज्ञं
लिङ्गावृतं तत्कमलालयाख्यम् ।
श्रीसुन्दरं विष्णुपुरं च देवि
ततोऽपि तद्द्वीपगगन्धमादने ॥
नगोत्तमे लिङ्गवरं ममाम्बिके ॥
हरिः पुरा भार्गवजेन शप्तो
भार्यावियुक्तोऽप्यहनत्स रावणम् ।
तेनैव तत्पूजितमम्बिकेऽद्य
पश्याधुना सेतुवरं सुपुण्यम् ॥
तत्पश्चिमे पुण्यतमं ममाम्बिके
हालास्यसंज्ञं वर वेणुसंज्ञम् ॥
तत्रैव ताम्राचलसङ्गतोऽब्धि-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्तत्तीरसंस्थान्यपि देवि पश्य ॥
लिङ्गानि तुङ्गानि मनोहराणि
महेन्द्रशैलो मलयश्च शैलः ।
एतानि ते क्षेत्रवराणि देवि
दृष्टानि च श्रोत्रवरैः श्रुतानि ॥
पापाद्रिमौलेर्भिदुराणि पश्य
क्षेत्रे क्षणेनापि विमुक्तपापाः ।

क्षेत्राणां च पतिः सदैव कथितो देवेषु पश्यादरात्
आरात्सर्वजगद्गतोऽपि विदुषां दुष्टात्मनां शैलजे ।
कष्टान्यप्यसमीक्ष्य योऽत्र विहितःक्षेत्रेषु वा सादर-
स्तस्मै तां वितरामि मुक्तिमगजे रुद्राक्षभस्माहते ॥

*इति श्रीशिवरहस्ये प्रथमांशे ईश्वरदेवी-संवादे क्षेत्रवर्णनं नाम विंशोऽध्यायः ॥*

## ॥ एकविंशोऽध्यायः ॥

**देव्युवाच–**

के गच्छन्ति महादेव ह्येते देवगणाः शिव ।
भित्त्वैव मण्डलं भानोः क एते पुरुषोत्तमाः ।
सोमधामप्रविष्टाः के निवृत्ताश्च पुनः पुनः ।
धूमलेखानिभास्ते के काःस्त्रियस्ता वराननाः ॥
के ते गच्छन्ति मुदिता विमानैरर्कसन्निभैः ॥
ताडयन्ति कशाघातैर्मुद्गरैरायसैर्नराः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्त्रियो बालाश्च पुरुषैर्विकृताङ्गैः प्रहारिणः ।
पाशबद्धा विकर्षद्भिर्यान्ति के दक्षिणां दिशम् ।
तद्वदाद्य महादेव जगच्चक्रप्रवर्तक ।
सृष्टिस्थित्यन्तकार्याणां प्रवर्तकनिवर्तक ।

स्कन्दः (उवाच)

पश्योन्निद्रसुरक्तपङ्कजलसद्वक्त्रे सुनीलोत्पल-
(भ्राजफुल्ल) विलोचने हि यतयश्चोद्यद्रवेर्मण्डलम् ।
भित्वा यान्ति समुल्लसत्सरसिजप्रोद्भूतलोकं शिवे
वेदान्तार्थविचारसारहृदयाः श्रुत्वा गुरोर्वक्त्रतः ॥
तत्वं शब्दमसीत्यपीह च महावाक्यार्थतात्पर्यतः
शब्दब्रह्मपराश्च ये यतिवरा गच्छन्ति ते ब्रह्मणा ।
मुक्ता नैव निवर्तका हि गिरिजे तद्ब्रह्मलोकादुमे
ये वै त्वन्तिम कालशब्दत इमे मन्त्रेण कर्मन्दिनः ॥

ते वै सूर्यगतिं गता अपि शिवे तेनातुराःक्षीणतो
विद्युत्पुञ्जसमाः पतन्ति च ततो ब्राह्मण्यमासाद्य ते ॥
कृत्वा चाश्रममन्तिमं पुनरुमे वेदान्तनिष्ठा गुरो-
र्वक्त्राब्जच्युतवाक्यतो द्विजवरा नालीकजातासनो ।
लोकं प्राप्य विमुक्तये च सततं ते चाप्युपासन्त्यपि ॥
एते चागमसङ्गताश्च हि सदा यज्वानमित्याहुतिं
वैतानेषु हुताहुतीभिरधुना नीताश्च ते पूजिताः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

विद्युत्पुञ्जसमप्रभाभिरभितो ह्येहीति च प्रार्थिताः —
श्चन्द्रासारकरैः सदैव नितरां यान्त्येव तद्धामतः ॥

नित्याग्निहोत्रविधिपूर्णमसादिदर्श —
चान्द्रायणैश्च पशुभिःसुचतुर्मसेज्यैः ।
सौत्रामणीभिरथ चेष्टिसमूहजातैः—
स्तोमैस्तथैव कठकाग्निचितो द्विजाग्र्याः ॥

एकाहाहीनसत्रैर्यजति च सततं चाग्निचेता द्विजो यः
यज्वा चारुणकेतुतोऽपि नगजे यात्येव चन्द्रांशु तत् ।

किं पाकयज्ञगतिभिः स्मृतिजातधर्मैः
पाकोभवत्यतितरां सुकृतैश्च पाकैः ।
किं पाकसेवितजलेन किमत्र सारः
किम्पाक एव फलतो भवतीति मन्ये ॥
ये राजसूयनर सर्वगवाश्वमेधै-
र्मेधाधिपं च सकलाधिपमाद्रियानाः ।
ये सप्तहोतृविधि याजनतो भवानि
सूर्यातिवाहिकगतिं सुकृतैः प्रयान्ति ॥
इष्टापूर्तं दत्तमि(धर्म इ)त्येव यो वै
मत्पादाब्जध्यानपूजाविहीनः ।
अभ्रं धूमो रात्रिमासार्धमासैः
यान्त्येवान्ते धाम सोमस्य गौरि ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तपःश्रद्धायोगैर्विविधभववर्णाश्रमरता—
स्ततो नैष्कर्म्येण प्रथितगुरुवेदान्तनिरताः ।
तथैवाह्नोमासा(?)ः पुरुषमथवा मानवमुमे
गतिं यान्तः सौरीं मम विविधपूजैकनिरताः ।

चन्द्रादभ्रं धूमजालं च वायुं
विद्युद्वर्षं चौषधीनां गणेषु ।
जाताश्चान्नं पूरुषो योऽद्यते य—
द्रेतो भूत्वा स्त्रैणगर्भे पतन्ति ।
ये वे पापाः श्वान चण्डालसर्पा—
भूदाराणां यान्ति योनौ तिरश्चाम् ।
ये वै पुण्या विप्रबाहूरुजाताः
शूद्राःपुण्यापुण्यगर्भेषु देवि ॥
इष्टापूर्तविमोहिता बहुतरा अन्यार्चनध्यानिनः
नान्यच्छ्रेय इतीव मानसरसा बालाःपुनर्मन्यते ।
प्लवाश्चैते अदृढाः सर्वधर्मा
यज्ञाश्चैते तर्तुमम्बे(मम्ब)भवाब्धिम् ॥

दीक्षाभिस्तपसा व्रतैश्च नियमैः कृच्छ्रैश्च दानैस्तथा
योगैर्वा श्रुतिपाठनैश्च पठनैरिष्टैश्च पूर्तैःशिवे ॥
वेदान्तार्थ विचार नन्दित महाकर्मन्दिवर्यैःशिवे
वर्णी चापि गृही वनी च सततं तत्प्रोक्तधर्मादरः ।
यत्प्राप्नोति फलं च लोकमखिलं भूयस्ततोऽप्युत्तमं

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कैलासं समवाप्य मत्पदमहाध्यानेन सम्प्राप्यते ॥
मखमुखसुखसोमजातधारां शिखिशिख विततां तथाज्यधाराम्
लखलखितमुखास्तथेन्द्रलेखाखगपतिवाहयुताखुवाहयुक्ताः ॥

शिखिवाहाग्रसरा विमानयुक्ताः
परिपीत्वा हरिभिर्विमानवर्यैः ।
अभियान्त्यम्ब विलोकयाद्य नाकं
परिपश्यामलपङ्कजास्यनेत्रे ॥
सुरसङ्घं मुदितं प्रपीतसोमं
विहरति स्वगणैश्च नन्दनोत्थैः ।
सुमजालैश्च सुचन्दनार्द्रगात्रं
विहरति स्म विमानवर्यसंस्थम् ।

एते यज्विन एव केवलमुमे कर्मैकनिष्ठाःसदा
सन्त्यक्तान्यविधिप्रदानित महादानैकनिष्ठाः परे ।
ते वै चन्द्रमसं प्रयान्ति नगजे धूमादिमार्गेण वै
पाथेयात्मक कर्मजातमखिलं भुक्त्वा पतन्त्यन्ततः ॥
रम्भारम्भोपमोरुद्वयगतसुभगे भेकपृष्ठाभके ते
कुम्भोद्यत्कुम्भिकुम्भोपमघनजघनेनावृता नन्दनेषु ।
तद्बिम्बोपमसुन्दराधररसं पीत्वैव पीनाङ्गकाः
तद्वक्षोजविहार सारहृदयाः पश्याम्बिके यज्विनः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

एतद्यौवतमण्डलं कचभरासंसक्तसत्केतकं
भर्त्रालिङ्गनपानपीनमनसं दिव्याङ्गरागांशुकम् ।
नानारत्नविकासिताखिलदिशां स्तोमप्रभाभासुरं
यानैर्यातिसदा मुदा पितृवने भर्त्राग्निदग्धं हि तत् ।
गच्छन्ति पश्य मुदिताःसुरचामरौघैः
संवीजिताः सुरसशक्रसदो विमानैः ॥
गोभूमिवस्त्रान्न सुवर्णकुप्य—
रौप्यप्रदा धान्यमहीसुरत्नदाः ।
विप्राग्रहारवनरोपणवापिकाभिः
पान्थान् खरोग्रकिरणैःश्रमभारखिन्नान् ॥
स्विन्नाननाङ्गान् सुखशीतवातैः
कन्यान्नपानादिसुपादसेवनैः ।
विश्रामयन्ति क्षणमम्बिके ये
शालासु ते यान्ति शिवेऽद्य पश्य ॥
एते वीरभराः सुशस्त्रनिवहैर्बाणैरसिद्योतितै—
र्धारासारशरेषु ये सुमुखतःप्राणान् त्यजन्ति प्रियान्
तेऽमी मण्डलमाशु सप्रभमुमे तेजोमणेरन्तरा
यान्त्येवाद्भुतविक्रमार्जितयशःस्फीताखिलादिक्तटाः ॥
हीराकारसुतारकाकृति सुखं भुक्त्वेन्द्रलोकं गताः
भ्रश्यन्ति क्रमशोऽमरेश्वरि पुनर्नीरे तटे चौषधौ ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पश्यैतान् सुदति प्रकृष्टविभवोपान्ते पुनर्गर्भगा
नेवं शीघ्रतरं प्रयान्ति सुकृतैरिष्टैश्च पूर्तैरपि ॥

यमभट कृतपाशबद्धहस्ता
मुसलविदारित रक्तगन्धमस्ताः ।
सरभसमुपयान्ति चार्तरावैः
यमभवनं परिपश्य पापिजालम् ।

ते वै कालमुखे दयारसहते सन्तप्तभ्राष्ट्रस्थिताः
कुम्भीपाकमुखे शिवे कृमियुतापारे मलानां ह्रदे ।
क्षारापारसुकर्दमे व्रणयुतैर्गात्रैस्तु सन्मक्षिभिः
काकैर्वृश्चिकदन्दशूकविषतःखिद्यन्ति पश्याम्बिके ॥
ऐत नारकिणःसदोदररता दारैःपरैर्मैथुना—
न्नानापातकसंयुता गुरुजने शैवे च सन्दूषकाः ।
स्तेनाः पाप(न्थ)हराः परान्ननिरता दुर्द्यूतदुष्टालयाः
पाषण्डा भुजयोर्महायसवरैस्तप्तैश्च चक्रैर्युताः ।
येषां फालतलं त्रिपुण्ड्ररहितं ये रुद्रजाप्येज्झिता
ये लिङ्गार्चनसाधनादिविमुखा ये शम्भुनाम्नोज्झिताः
ये रुद्राक्षविधारणे च विमुखाःपञ्चाक्षरेणोज्झिताः
ये मत्क्षेत्रनिवासहीनमनसो भक्तेषु सन्दूषकाः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मां विश्वाधिकमीश्वरं त्रिजगतामाधारभूतं शिवं
विष्णुब्रह्ममरुद्गणैःसममुमे पश्यन्ति तान् पश्य वै ॥

ये वै प्रदोष परिपूजनतो विहीना
ये वा नरा मम निवेदितभुक्तिवर्ज्याः ।
तेऽमी कालभयं प्रयान्ति नरके दुःखाकुलाःपातका-
कल्पेनापि विमुक्तिरेव सततं नास्तीति मन्ये शिवे ॥

शिवालयविभङ्गकाः शिववनादिपुष्पाहराः
शिवद्रुहजनार्चका मयि सदा विनिन्दारताः ॥
त एव यममन्दिरान्तरनिवास लालाभुजो
भवन्ति कृमिवक्त्रका नरकचित्रवैचित्र्यके ॥

ये रुद्राक्षविभूषणाः सितलसद्भस्मत्रिपुण्ड्राक्षका
मन्त्रैर्वेद्यसुधाशना शिव महादेवेति नामादराः ।
मल्लिङ्गार्चनतत्पराश्च सततं रुद्रार्थपारीणकाः
ये रुद्रामल सत्कथासुरसिकास्ते मद्गणाः शाङ्करि ॥

भस्मत्रिपुण्ड्र शिवजाक्षधरास्त एव
हारा भवाम्बुनिधितारककर्णधाराः ।
रुद्राध्यायविचिन्तनैकमनसः पञ्चाक्षरे सादराः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तन्मन्त्रैश्च शिवाभिषेकनिरताः लिङ्गार्चने सादराः ॥
ते हारा मम सम्मताश्च गिरिजे तेषामियं वासभूः ॥

श्रुत्युक्ताचारधाराचरणपरिकराश्चान्तरायैर्विहीना ।
हीनाचारविचारवर्जितमनःस्वान्तादराः शाङ्कराः ।
पारावारभवोग्रसारविरसे त्यक्तादराः शैलजे
ते यान्ति प्रसभं ममालयमिदं नान्येऽद्य सत्यं ब्रुवे ।
कैलासाचलरुद्रमूर्तय इमे चन्द्रार्धचूडाःशिवे
नीलेन्दीवरलोचनत्रययुगास्ते नीलकण्ठाःसदा ।
मत्पार्श्वे गणपा भवन्ति गिरिजे ते शाङ्कराःसर्वदा ॥

**स्कन्दः**

इति सर्वगतीःश्रुत्वा शङ्करात्परमेश्वरी ।
प्रणम्याह महादेवी कैलासवरगोपुरे ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

देवी

असारसारं प्रवदन्ति वेदाः
स्त्रियः प्रजानां पशवो हिरण्यम् ।
गुणत्रयीमध्यगता प्ररोचना
गुणातिगत्वान्न भजन्ति केऽपि ।
प्रवृत्त्युन्मुखा बालकाः कामयन्ते
सुखापारबुध्या महादुःखजालम् ।
यथा भक्ष्यबुध्या महापाशजालै –
र्निगृह्णन्ति(गृहीतास्तु) मत्स्या जले धीवरैश्च ॥
कथं त्वत्पदाब्जं खनिं वै विमुक्तेः
समायान्ति दुःखाकुला दुर्मुखास्ते ।
यथा त्वां चिदानन्दरूपं च सत्यं
असत्यैकलीला भवन्त्येव बालाः ॥

शशे श्रृङ्गवार्ता यथा स्याद्यथा वा
तथा कूर्मदौग्धं(दुग्धं)मरौ वा यथापः
तथा विश्वगाः प्रार्थयन्तीह कामान्
मनोमूलमेतन्मनो नास्ति यत्र ॥
भूमात्वं गिरिजापतिःशिवतरो वामार्धनारी हरः
वामार्धाकृतिरप्रमेयविभवस्त्वं सोमधामाननः ।
कामाङ्गारिरकामसक्तहृदयस्त्वं सामचर्माम्बरः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

त्वामप्राप्य महेश सामरवतस्तोषप्रदं शङ्करम् ।
कामान् प्रार्थयते विमूढहृदयास्तेषां श्रमःकेवलं
सामागोमनतो रमापतिलसन्नेत्राङ्घ्रिरीशःसदा ।
धूमाकारघनस्थितोऽसि भगवन् त्वं व्योमकेशः सदा
धौम्याग्न्यर्चितपादपद्मयुगलश्चोमापतिः शङ्करः ॥
कामान्मे दिश गौतमादिमुनिभिर्वेदस्तुतोऽसि प्रभो ।

*इति श्री शिवरहस्ये प्रथमांशे शिवगौरीसंवादे गतिनिरूपणो नामैकविंशोऽध्यायः ॥*

## ॥ द्वाविंशोऽध्यायः ॥

**स्कन्द उवाच**

कैलासात्पूर्वतो भाति निष्टप्तकनकप्रभः ।
लक्षत्रयान्तरं तस्माद्भाति मेरुः सुरालयः ।
तदग्रवृषभस्तम्भे ध्रुवाद्यास्तत्रदक्षिणे ।
कालचक्रान्तराः सर्वे भ्रमन्ति च दिवानिशम् ।
ध्रुवः सप्तर्षिभिश्चैव राज्ञा चाथ त्रिशङ्कुना ।
तदूर्ध्वशैलमौलिस्थान् स्मरशासनशासनात् ।
नानाद्रुमलतोपेतो रम्यपक्षिमृगैर्युतः ॥
सरस्तत्रास्ति विपुलं मानसाख्यं मनोहरम् ।
उत्फुल्लहेमकल्हारहेमपङ्कजभासुरम् ।
तदग्रमौलौ देवानां ब्रह्मविष्णुहरात्मनाम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

दिक्पालानां च सर्वेषां गन्धर्वावसथाः कृताः ।

सत्यलोको ब्रह्मणश्च वैकुण्ठो वैष्णवं पुरम् ।

अंशोनत्रीणि रुद्रस्य पुराणि क्रमशो मुने ।

तादृशःकनकाकारः पर्यन्ते वर्षभूषितः ।

कुमुदाकारवद्भाति भूमेः पर्यन्तसागरैः ।

रत्नसालवनं तस्य मेरोर्मूर्ध्नि सुविस्तरम् ।

तत्रास्ति गोपुरं शम्भोर्मणिमाणिक्यभूषितम् ।

कदाचिच्छ्रीमहादेव्या देवो विहरति स्वयम् ।

शप्तोऽस्ति देवदेवेन तत्रान्तो भूधरस्य हि ।

यो वात्र कश्चित् प्रविशेत् स भवेत्स्त्रीवराकृतिः ।

वृषस्तम्भनिभो मेरुः कैलासस्यास्य सत्तम ।

स्कन्दः

तस्मिन्देव्या वसन् शम्भुः पार्वत्या रुद्रकैर्वृतः ।

देव्याः सखीभिरभितो दिव्यसिंहासने स्थितः ।

कदाचिद्देवसङ्घानां पुराणि क्रमशः शिवः ।

मेरुमौलौ महालिङ्गमौर्वीशाख्यं मनोहरम् ।

तद्गोपुरमहासौधराजत्कलशवेदिकम् ।

तत्र सम्पूजयन्त्येव ब्रह्मविष्णुमहेश्वराः ।

तल्लिङ्गं बिल्वपत्रैश्च हेमपङ्कजकैरपि ।

धूपैर्दीपैश्च ते देवाः नैवेद्यैश्च मनोहरैः ।

प्रदक्षिणप्रणामाद्यैः स्तुवन्ति च सुरासुराः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

देवा ऊचुः

कुन्दामन्दमरन्दसौभगमहामन्दारसन्मालिका –
लोलोत्तुङ्गतरङ्गरङ्गितमहागङ्गाम्बुजोत्कैरवम् ।
पर्वानन्दितशर्वरीरमणतोत्तुङ्गाङ्गमौलिं शिवं
ध्यायामोऽद्य महाघसंसृतिभवं दुःखं विहायादरात् ।

आरक्तसुन्दरतरैः कुरुविन्द वृन्द –
रक्तारविन्दमकरन्दपरागमौलिम् ।
वृन्दारवन्दित पदाम्बुरुहं महेशं
सुन्दोपसुन्दवरदं जगदादिकन्दम् ॥

मूर्ध्नोऽर्धं मधुपालिझङ्कृतियुतं चञ्चज्जटानिर्झरं
शैलान्निर्झरसारिणीव भवतो दृष्टिर्भवाम्भोझरी ।
उद्यद्रागमलीमसान् झटिति नो नोज्झन्ति पादौ हृदि ।
ते धन्याः सजलञ्झलौ स भगवान् भूयच्छ्रियै सर्वशः ॥

सूतः उवाच

एवं स्तुवन्ति ते देवा मेरुमौलिस्थितं शिवम् ।
गन्धर्वाप्सरसः सिद्धा मुनयो वीतकल्मषाः ।
केलासेऽत्र महादेवः सन्निधत्ते सदैव ।
देव्या मणिमये सौधे विहरत्येष शङ्करः ॥
तद्विहारं श्रृणुष्वाद्य सर्वपापविनाशनम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नानाचित्रविचित्राश्च क्रीडास्ताः परमेशितुः ॥

देव्या सह सुरश्रेष्ठाः केन वा वर्ण्यते हि ताः ॥

रुद्राण्यो नवयौवनोच्चलकुचास्ताःसोमधामानना

रत्नोत्थामलकान्तिभूषिततनूवल्यःप्रभाभासुराः ।

सम्बद्धस्तनचेलकेशवलयाः सेवाधिकारादराः

राजन्ते कलधौतसानुशिखरे लीला झणन्नूपुराः ।

उद्यत्काव्यनिभाच्छचम्पकमहानासालसन्मौक्तिकाः

ताराकारसुहीरहारवलयैस्तास्तत्र विद्युल्लताः ।

रुद्राश्चापि महेश्वरं त्रिजगतामाधारभूतं हरं

तत्तत्कालसुसेवनैरनुपमैःश्रान्तिं विहायादरात्

स्नानोद्यन्मणिसुन्दरैश्च कलशैः स्रग्गन्धधूपार्पणैः ।

दीपैः केशसुधूपनैः परिकरैः पर्यङ्कविश्राणनैः ॥

छत्रैश्चामरवीजनैः प्रपदकैरादर्शताम्बूलकैः

वीणाभिः पटवासखड्गनिकरैःसेवन्ति शर्वं शिवाम् ।

रुद्राण्यो नवकोटयश्च(तरुणा रुद्राश्च)कोट्यो दश

भैरव्योऽथ दिगम्बराश्च सततं कोटीभिरन्वास्यते ।

योगिन्योऽथ त्रिकोटयश्च परितस्ते डाकिनीकोटयो

रोहिण्या सहितेन्दुधामवदनाः सेवन्ति शम्भुं शिवाम् ॥

कैलासे नवशक्तिरत्नविलसत्पीठे महातत्ववा-

ग्जातेनैककोटिविस्तरयुते श्रीचक्रमध्यं गते ॥

बिन्दौ चन्द्रदिनेशकोटियुगले मञ्चे चतुष्पीठके

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पञ्चब्रह्ममये वयं गिरिजया सार्धं हृदा दध्महे ॥

शशिप्रसृमरैः करैःसितसितायमानो गिरिः
प्रभाततसुधाम्बुधेश्चलतरङ्गहस्तोत्थया
समुच्चलितनौकया सकलरत्नसङ्क्लृप्तया ।
सुधांशुशकलालको विहरति स्फुटं सोऽम्बया ॥

स्वच्छाद्रिपारदमहाकलधौत शैल—
सानुप्रभासमधिकोन्नतपाण्डराङ्गम् ।
चञ्चद्विषाणमकुटीतटलम्बमान-
सच्चामरौघपरिवीजितकर्णतालम् ॥

कान्त्या स्वया परिमुषन्तमिवोद्यतांशु—
मुक्षाणमद्रितनयापतिरक्षिफालः ।
आरुह्य याति नगराजसुतासहायः ॥

उक्षाधस्तलपक्षतिप्रचलितो देवस्य पादाम्बुजे
स्वस्कन्धे मणिपादुकोत्तमलसत्सानन्दनामा गणः ।
पाहीशेति वदन् शिव महादेव प्रभो मां सदा
तारानाथ कलाधर श्रुतिशिरःकोटीरपालीगत ॥

कैलासमौलिधवलोत्तम शृङ्गसंस्थ—
लिङ्गावलिं समभिवीक्ष्य महोरुहर्षाः ।
पश्येति तामगसुतां प्रवदत्यभीक्ष्णं
त्र्यक्षोऽक्षताक्षमनसा परिचिन्तनीयः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सौवर्णरत्नखचितैर्मणिजालक्लृप्तै-
श्चक्रे महोन्नततले शशिधामकुम्भम् ।
देव्या रथं रथपतिः प्रथितो हि वेदै(देवै)-
रारुह्य याति नगमौलिमहो द्विजेन्द्राः ॥

नानारत्नयुतप्रभाततिततं मुक्ताच्छगुच्छान्वितं
पालीपालिमरालराजनिकरैर्मुक्तावितानैर्युतम् ।
भ्राजद्दिव्यपताकचामरयुतं छत्रैरपारैर्युतं
आरुह्याखिलशैलराजसुतया दिव्यं विमानं हरः ।
कैलासोत्तममौलिपालिषु सदा पश्यन्प्रयातीश्वरः
देवादीनखिलान्विलोकयति वै तल्लोकलोकानपि ।
ब्रह्माण्डान्तिकतःस्फुरत्सुरतटी(टिन्याटोप)मौलिःशिवः
विश्वं चित्रमपारचित्रकयुतं युक्तोऽम्बया केवलः ।

ईश्वर उवाच-

सुरतरु निचितो भोगजालतर्कोः-
(सुरतरुचितभोगजाततर्षाः)
सुरतरुचितदेवपुण्यवार्भिः ।
सरभसमपयान्ति कर्मदेवाः
गिरिजे पश्य महाविमानवर्याः ॥

देवस्त्रीकरकङ्कणोल्लसमणिस्फारप्रभाभासुर
देवोद्यान निकुञ्जसीमसुभगैः स्रग्गन्धवातैरपि ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तत्रत्याच्छसुधा(सुधा)धररसास्वादौदनाः केवलं
ते दैवैः सह भोगभाग्यनिकरैः पुष्णन्ति पश्याम्बिके ॥
विष्णुब्रह्ममरुद्गणैःसममुमे मां पश्यते योऽधमो ।
लालाजालमुखेषु पूयकृमिजापारे मलाब्धौ स्थितः ।
शस्त्रोद्यद्विपिनाग्रगक्रकचघाताःकल्पविष्ठाशना-
स्तिष्ठन्त्येव कनिष्ठनिष्ठुरवचोदुष्टाःकशाताडिताः ।
दृष्टःकष्टजभोगभाग्यफलभाङ्मन्निन्दनादद्रिजे ॥
पश्य नारकगणं बहुदुःखितं
लिङ्गमङ्गलददर्शनोज्झितम् ॥

कुम्भतैलपचनेन सुपक्वं
भक्ष्यवन्निगिरते यम एनम् ॥
रुद्राक्षकण्ठवरकर्णमहोरुहाराः
कोटीरकङ्कणकशोभितबाहुदण्डाः ।
प्रदोषलिङ्गार्चनलिङ्गधाम-
सन्दर्शनानन्दितवृत्तयो ये ।
यान्त्येव कैलासवरं ममालयं
त एव हारा मम सम्मताःशिवे ॥
कैलासाचलमौलि संस्थित महालिङ्गालयेषूद्यतां
भ्रान्तिं ते जनयन्ति रत्नकलशा नानार्कसोमा इव ।
अत्रत्यामललिङ्गमौलिजजटाचूडेन्दुगङ्गादयो
द्योतच्छैलशिखाविराजितशिखाकारोऽद्य शैले मम ॥

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पश्याद्रिजे गिरिवरोच्चतलिङ्गसङ्घं
सम्पूजितं च विलसन्नवबिल्वपत्रैः ।
तत्रैव गाङ्गजपयोजवरन्यमील-
त्तन्मौलिचन्द्रजकरैर्विकचोत्पलमम्ब पश्य ॥

गणकरसम्पुटोत्थशङ्खनादै-
र्मधुरैर्मद्दलडिण्डिमोत्थनादैः ।
शिवलिङ्गाग्रगता गणा विरेजु-
र्मम शैलोऽपि सदैव घोषयुक्तः ।

कैलासोऽप्ययमद्रिराजतनये मल्लिङ्गमौलिःसदा
जातो मन्दरदानतश्च सुमहत्तेनापि तप्तं तपः ॥
तत्राहङ् न सुरादिसङ्घनिकरैस्तप्तं मुनीनां गणैः
शैवेन्द्रैर्मम सद्गणैरपि शिवे तस्मिन् दया मे परा ॥

इत्यम्बावदनं निरीक्ष्य भगवान् आह प्रमोदास्पदं
कैलासस्य गुणौघवर्णनमहो देव्याःपुरः शङ्करः ।
रम्यं तत्र ममालयं करिवरास्यस्यापि वक्ष्ये मुदा
तस्याप्यद्भुतमीश्वरस्य समुखे संस्थस्य धर्मस्य हि ।

*इति श्रीशिवरहस्ये प्रथमांशे कैलासलिङ्गवर्णनं नाम द्वाविंशोऽध्यायः ॥*

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ त्रयोविंशोऽध्यायः ॥

**स्कन्द उवाच**

श्रृणुध्वं ब्रह्मविष्ण्वाद्या जैगीषव्य गणोत्तमाः ।
तत्रान्तरेऽस्ति प्राकारो गोमेदमणिकल्पितः ।
गोमेदगोपुरश्चैव चतुर्दिक्षु विराजितः ॥
चतुर्दिक्षु गोपुराणि लक्षमानेन सत्तमाः ॥
वेदिकापट्टिकाभिश्च तोरणालङ्कृतानि हि ।
राजत्कुम्भपताकाग्रैर्वृषभैस्तन्मणिप्रभैः ॥
रुद्रावतारचितैर्गवाक्षैः स्फाटिकैरपि ॥
कुमुदैर्व्यालिपीठैश्च देवगोष्ठयुतान्यपि ।
मण्टपावलिसङ्क्लृप्तैः सहस्रायुतशो गणाः ।
मणिकाञ्चनचित्रैश्च मुक्तावितततोरणैः ।
सरोभिः सागराकारै रत्नसोपानमण्डितैः ।
दत्त्रान्तमण्टपवरैः सहस्रस्तम्भशोभितैः ।
सरोमध्यमणिव्रातमण्टपैरुदितैरपि ।
तत्रान्तरे तु प्राकारे गोपुरान्तरदक्षिणे ।
तत्र मत्सदनं दिव्यं नानारत्नचितं शुभम् ।
लक्षस्तम्भयुतं सौधं नवरत्नाग्रश्रृङ्गकम् ॥
तत्सालभञ्जिकानिर्यद्रत्नकान्तिविभासितम् ।
तमःस्तोमतिरस्कारिमणिभिः कृतशेखरम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

गवाक्षितं विचित्रैश्च नवरत्नप्रभाधिकम् ।
हरिन्मणिकृतैश्च मयूरवरकुक्कुटैः ॥
शोभितैर्मण्टपाद्यैश्च(ग्र्यैश्च)वरप्रासादतोरणैः
प्राकारैः सुन्दरतरैः गोपुरावलिभासुरैः ।
मणिद्वारकवाटैश्च शातकुम्भशलाककैः ॥
धूपामोदयुतापाररम्योद्दामसुगन्धितम् ।
मणिद्वीपप्रभाभासिरञ्जिताखिल दिक्तटम् ।
तत्र दिव्यसुमामोदि वनं चैत्ररथाधिकम् ।
मण्यालवालकलितं रत्न वेदित्विषा ततम् ।
नानादेवद्रुमापारवल्लीगुच्छ विराजितम् ।
कौमारं नाम तत्रास्ति सरश्चोत्फुल्लपङ्कजम् ॥
मणि सोपानपालीभिस्तत्रान्तमणि मण्टपैः ।
क्रीडामृगैः शुकैश्चापि मणिपञ्जरं शारिकैः ।
तत्र तत्सौध मध्यस्थं मम सौध वराश्रयम् ।
सिह्मासनं रत्नक्लृप्तं पञ्चयोजन विस्तृतम् ॥
तत्राहं सेवितो वीरैः नवलक्षैरुदायुधैः ।
सिह्म संहननैर्वीरैःकौमारैरुद्यतायुधैः ।
मत्तद्विप कराकारबाहुभिः शक्ति संयुतैः ।
वीरबाहुप्रभृतिभिः पुष्प वस्त्राङ्गलेपनैः ।
छत्रचामरहस्तैश्चाप्यासेऽहं सेवितस्तदा ।
महार्ह वसनोपेतो नवरत्नविभूषितः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

षड्वक्त्रमकुटोद्भासि रत्नकुण्डलकाङ्गदः ।
रत्नाङ्गुलीय विलसत्तलाङ्गुलिपदाम्बुजः ।
मणि माणिक्यमञ्जीररणन्नूपुरमेखलः ।
देववल्या सेनया चापीन्द्राद्यैरपि सेवितः ।
षड्भिश्च वदनैश्चैव स्तुवन्द्वादशलोचनैः ।
पश्यँल्लिङ्गं हि कैलासे कौमारेश्वरमीश्वरम् ।
हीरसारमहाधाराप्राकारे दक्षिणे स्थितः ।
तन्नीलगोपुरोत्तुङ्गनीलधारावता दिशः ।
रुद्रावतार क्रीडादितलशोभैक भासुरम् ।
राजल्ललामवृषभं शम्भोःकैलासगोपुरम् ।
पञ्चलक्षप्रमाणेन कलितं विस्तरायतम् ।
दक्षिणे गोपुरप्रान्ते शम्भोःप्राकारमध्यमे ।
तत्कुमारपुरं मेऽद्य नानासौधविराजितम् ॥
कौमारैर्मद्गणश्रेष्ठैर्मया च परिपालितम् ।
तत्र मत्पुरमध्यस्थं कौमारेशस्य गोपुरम् ।
नवरत्नप्रभा भास्वत्प्राकाराट्टाल सुन्दरम् ।
गर्भागारमहाकान्ति धगद्धगित दिङ्मुखम् ।
मणिकुम्भोद्यतशिखावलीढगगनाङ्गणम् ।
ममेष्टलिङ्गं तत्रैव देवदेवस्य शूलिनः ।
त्रिकालं तत्र तल्लिङ्गं पूजयामि गणैर्वृतः ।
धूपैर्दीपैश्च नैवेद्यैः पञ्चामृतनिषेचनैः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वीणा वेणुमृदङ्गादिशङ्खकाहलनिस्वनैः ।
मधुरोद्दामगीतैश्च कौमारीणां च नर्तनैः ।
हावभावमनोहारि तौर्यत्रिक मनोहरैः ।
षड्वक्त्र फाल कलितत्रिपुण्ड्रतिलकोज्ज्वलः ।
भस्मरुद्राक्षवलय सरावालि विभूषितः ।
षड्वक्त्रपङ्कजस्यन्दि सुधासम महारसैः ।
स्तौमि स्तोत्रवरैःशम्भुं तत्स्तुतिं श्रृणु सत्तम ॥

स्कन्द उवाच–

छद्मस्वर्ग विनुतागम वर्य
कर्कर्यागम दूर्वयार्चित ॥

मेरुमौर्विकृतदर्विहस्तक
पाहि मामव महेश सर्वग ॥
विक्रमाक्रमित लोक चङ्क्रम
पादमूलमपि नो त्रिविक्रम ।
पाप(प्राप्त)कूपसदनः किमु भेक-
स्सागरोत्तरणहेतवे हर ।
स्वर्णवर्णकृतलोचन कर्णा-
पारहारक महार्णवसंस्थ ।

वर्णितागम अपर्णयार्चित
पर्णपत्ररथपूज्यपदाब्ज ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कर्णकुण्डलकृताहिवरेश

पारयार्णवभवं सुकर्णधारक ॥

गन्धबन्धुमधुपावलिभास्व-

द्राजराज शकलामल मौले ॥

देवलोकतटिनीगतफुल्लैः

नीलकैरवकुलैक सुपूज्य ।

वाहा जिह्वाति सङ्ख्याकृतनयनयुगं तल्प सङ्ख्यापि तादृक्

दशयुगलललामं देव मन्दार मालम् ॥

कौमारशङ्कर गिरां मनसोऽतिदूर

कर्पूरगौर सुशरीर धृतोरगेन्द्र ।

मारापहार पुरगर्वहराव्ययेश

विश्वेश्वराव दयया तव बालमिष्टम् ॥

इत्थं षड्वदनैः स्तौमि कौमारेशं महेश्वरम् ।

मद्गणैर्नवलक्षैश्च तत्कौमारपुरः स्थितः ।

गोपुरं नीलमणिभिः प्राकारं तच्च कल्पितम् ॥

तत्कैलासं महेशस्य शक्ति हस्तैरुदायुधैः ।

रक्षामि सर्वदा विप्र शासनाच्चन्द्रमौलिनः ॥

तन्नीर(ल) सार परिकल्पित गोपुरोद्य—

त्कुम्भावली वितत हेमपताकजालम् ।

शक्रोपलाकलितगोवृषभालि राज-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

त्राकारसौधविहितोरुमणीन्द्रलिङ्गम् ॥
सम्पूजयन् गणवरैर्भगणेशचूडं ॥
कैलासपर्वतवरे निवसामि विप्र ॥

*इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने स्कन्दस्तुतिर्नाम त्रयोविंशोऽध्यायः ॥*

## ॥ चतुर्विंशोऽध्यायः ॥

स्कन्द उवाच–

पश्चाद्भागे हरिज्योति हरिन्मणि विराजितम् ।

पञ्चलक्षप्रमाणेन प्राकारं मणिगोपुरम् ॥

महामरकतैः क्लृप्त गवाक्षावलिभिर्युतम् ।

अष्टाशीतिसहस्राणि [स्रेण] योजनैः परिकल्पितम् ।

पश्चाद्भागे तु तद्द्योति हरिन्मणिनिभा दिशः ।

तत्र गारुत्मतमणिक्लृप्तमण्टपशोभितम् ॥

उद्यदिन्दुकर स्वच्छनिर्यज्झरिभिरावृतम् ।

तत्राच्छस्फटिकोद्दामसिह्मासनशतैर्वृतम् ।

धूपदीपादिबहुलं नानासुमवनावृतम् ।

मणिमाणिक्य खचितमण्टपे स्वास्तृतासने ।

तस्मिंस्तिष्ठति विश्वेशः स्वगणैरर्चिताङ्घ्रिकः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सप्तलक्षगणेन्द्रैश्च विघ्नाद्रिकुलिशो महान् ।
नानारत्न चितानेक भूषणैःपरिशोभितः ।
सिन्दूर विलसत्फालो महासिन्धुर वक्त्रकः ।
माणिक्यमकुटोद्भासि फालचन्द्र विराजितः ।
शुण्डादण्डमहोच्चण्ड बृंहितानन्दिताम्बरः ।
कुम्भान्तर लसन्मुक्तागुच्छसच्छायितास्यकः ।
कर्णपत्रमणि भ्राजच्चलत्कर्णयुगच्छविः ।
दन्तावलिमहारत्नदन्तवेष्टन सुन्दरः ।
तदधस्ताल्लसन्मुक्तामणिपत्रविराजितः ।
सितभस्मत्रिपुण्ड्राङ्ककुम्भमध्यविराजितः ।
सिन्दूरतिलकोत्फुल्ल वदनानन्दशोभितः ।
मुक्तागुम्फित कर्णाग्रवीजितोड्डीनषट्पदः ।
स्रवत्कटि तटोद्भासि मदगन्धितदिक्तटः ।
शिवपादाम्बुजध्यानानन्दोन्मीलितलोचनः ॥
महानागनिबद्धोरु उदा(पिठ)रोदरसंयुतः ।
फुल्लपद्मामलपदः सुरासुरगणानतः ।
पाशाङ्कुशरदद्योतिमोदकासक्तसत्करः ।
रत्नाङ्गदैश्च केयूरैर्भ्राजत्करिकर प्रभः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पादाक्लृप्तरणत्सिञ्ज(च्छिञ्ज)द्रत्नमञ्जीर शोभितः ।
दिव्याङ्गरागसुभगो मणिहाराम्बरावृतः ।
पार्श्वद्वय विराजच्छ्रीसिध्या बुध्या विराजितः ।
सर्वाभरणभूषाभ्यां सेवितः पार्श्वयोर्द्वयोः ।
गणेन्द्रैश्छत्रदण्डोद्यन्मणिचामरसत्करैः ।
सेवितः श्रीगणेशानस्तस्मिन्कैलासमण्टपे ॥
चलच्चामरवातैश्च चलत्कर्णाग्र चामरः ।
तादृशो गणपस्तत्र पाशाङ्कुशकरस्तदा ।
महाबला महोत्साहाः कुठारवरपाणयः ।
सिन्दूरारुणफलाग्रास्त्रिपुण्ड्रपरिशोभिताः ।
रक्षन्ति ते गणास्तत्र प्राकारं तच्च गोपुरम् ।
सप्तलक्षामितबलाः गाणेशा गणपास्तथा ।
तत्रैव देवदेवस्य शासनाच्चन्द्रमौलिनः ॥
गणेशोऽपि सदा ध्यायन् गणेशेश्वरपूजकः ॥
तत्रेष्टलिङ्गं तत्रैव वरप्राकार गोपुरम् ।
नवरत्नचितं दिव्यं मणिस्तम्भचितान्तरम् ।
गणेश्वराख्यं तल्लिङ्गं मणिधामगतं तदा ।
प्रोद्यत्कुम्भपताकाग्र पवनाधूत साञ्चलम् ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्वपुष्करधृतोत्तुङ्ग कुम्भपञ्चतैरपि ॥(पञ्चामृतैरपि)
सुधाधाराभिरासिञ्चच्चन्दनालेपि(प)सुन्दरम् ।
फणामणि महामौलि रत्नाभरणशोभितम् ।
सोऽद्य सम्पूजयत्येव बिल्वमन्दारचम्पकैः ।
दूर्वाभिः कमलैरीशं धूपैर्दीपैर्मनोहरैः ।
नैवेद्यैर्विविधैश्चैव ताम्बूलैश्छत्र चामरैः ।
गानैर्नाट्यैर्मृदङ्गाब्जकाहलानां च निःस्वनैः ॥
भस्मरुद्राक्ष सम्पन्नःस्तौति देवं महेश्वरम् ॥

गणेश उवाच

गणेश त्रिगुणातीत भगणाधीशमस्तक ।
गर्जन्मेघगणोद्भूततटिद्गण जटामल ॥
व्योमकेश भगवच्छूतिमौलि-
स्तोम साम विनुताखिल सोम ।
भूमभौममहिमागम काम-
धूमधामबहुलद्युतिकण्ठ ।
क्षयद्वीर मारापहाराद्य शम्भो
वीर धीर सुरशेखर पाद ।
घोरान्धकासुरनिबर्हण काल काल

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

क्रूरान्तर त्रिपुरगर्वहराव्ययेश ॥

दहरगगनशेखरोऽसि शम्भो

निरवद्याखिललोक सौख्य भूमन् ।

त्रिगुणगति विदूर दर्शिताद्य

प्रकटितवेदवचोभिरीड्यपाद ॥

करेकुरङ्गं स्वकपर्दगङ्गं

हारे भुजङ्गं यमिहृत्सुसङ्गम् ।

बालाकृताङ्गं सितभस्मसङ्ग-

मनङ्गमातङ्गहरं भजामि ॥

इति स्तौति सदा शम्भुं कैलासे स गणेश्वरम् ।

गणनाथो गणवृतः सदाशिवगणाग्रणीः ।

स्कन्द उवाच

तत्पाति गोपुरं शम्भोर्मणिप्राकारमप्यसौ ।

स्वकीयैर्गणपैः सार्धं चन्द्रचूडस्य शासनात् ।

हरिन्मणि कृताम्बरं हरितगोपुरं पश्चिमे

विराजिततलाङ्कणैर्वृषललामशृङ्गप्रभैः ।

गरुन्मणिवरप्रभं विततसौधरत्नोत्तमं

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वरप्रवरसुन्दरप्रकटवप्रप्राकारकम् ॥

स्वबाहुबलमाश्रितो द्विरद वक्त्रजैःसद्गणैः ॥

प्रयाति(प्रपाति)गणनायकः शिवपदाब्जसंसेवकः ॥

*इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने गणेशकृत स्तुतिर्नाम चतुर्विंशोऽध्यायः*

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ पञ्चविंशोऽध्यायः ॥

**स्कन्द उवाच–**

कैलासान्तरतः प्राच्यां पुष्परागादिनिर्मितम् ।
पञ्चलक्षप्रमाणेन प्राकारं वरगोपुरम् ।
उद्यद्भानुशताधिक्यचाकचक्यमनोहरम् ।
पुष्परागमणिप्रोद्यद्वृषभैः समधिष्ठितम् ।
प्राकारं लक्षमानेन मनसा शूलिना कृतम् ।
रुद्रावतारचरितैर्वेदिकापट्टिकान्वितम् ।
राजद्वृषभकुम्भाग्रदोधूयितपताककम् ।
पुष्परागमणिज्योतिस्तिरस्कृतशशिद्युति ।
तत्रैवान्तर्महारत्नगर्भमण्टपमुत्तमम् ।
स्तम्भैश्च दशसाहस्रैः समुन्नतिमनोहरम् ।
शिखाभिर्मणिक्लृप्ताभिर्वलिभिश्चुम्बिताम्बरम् ॥
नानारत्नमहावेदीपीठविद्रुमपुत्रकैः ॥
शोभितं रत्नगुच्छाच्छमालालम्बितपीठकम् ॥
तत्र सिह्मासने दिव्ये सर्वरत्नगणैश्चिते ।
धूपदीपादिबहुले मुक्तामालापरिष्कृते ।
वितानै द्योतितदिक्चक्रे नानारुद्रगणैर्युते ।
षष्टिसाहस्रसङ्ख्याकैरहिमन्युभिरुद्धतैः ।
त्रिपुण्ड्र(ट्र)विलसत्फालै रुद्राक्षवरभूषणैः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

त्रिशूलोद्यत्करैःशुभ्रैर्हेतचापशरावृतैः ।
जटातटनिबद्धेन्दुशेखरैरिन्दुसप्रभैः ।
समन्तात्सेवितो नित्यं वृषो धर्माकृतिर्महान् ।
धर्माधारमहापादो युगनामोरुपादकः ।
सत्यांशसुखुरोद्दामवर्णाश्रमकृताङ्घ्रिकः ।
मणिमञ्जीरनिनदनानाधर्मैकशब्दवान् ।
चतुर्वेदोपवेदोद्यद्वेदान्तमतदन्तकैः ।
पुराणन्यायमीमांसाद्वयतन्त्रोरुघण्टकः ।
पूर्वसिद्धान्तराद्धान्ततत्वशब्दघणाघणः ।
ग्रैवेयशोभितोदारघण्टाकलितकन्धरः ।
कैलासो जङ्गम इव श्रृङ्गद्वयविभूषितः ।
सुधामण्डलजोत्तुङ्गसुपाण्डरमहाच्छविः ।
संस्थितो देवदेवस्य सन्निधौ नन्दिकेश्वरः ।
पञ्चलक्षप्रमाणेन गात्रैः कर्पूरसन्निभैः ।
उद्यत्सुधांशुपूर्णाङ्गो लक्षयोजनपृष्ठभूः ।
ककुदा दशसाहस्रयोजनोन्नतवृत्तया ।
मुखेन त्रिंशत्साहस्रं नेत्रयोर्द्विसहस्रकम् ।
कर्णयोःपञ्चसाहस्रं विषाणे च सहस्रकम् ।
नासाविवरमुक्ताच्छनासा(श्वास)पञ्चसहस्रकम् ।
सहस्रयोजनायामलेलिहानाग्रजिह्वकम् ।
पश्यन्ननिमिषेणैव लोचनाभ्यां महेश्वरम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्वपृष्ठास्तृतरत्नाच्छपल्याणालम्बिमौक्तिकम् ।
स्वनासाविवरोत्थानवातोद्धूतमहागिरिम् ।
तद्वातोद्धूतवेलाश्चाप्युद्यतोच्चतरङ्गकाः ।
समुद्राः सरितश्चैव तच्चलत्खुरदारिता ।
भूर्भाति कम्पिता शैलैः सागरैश्च विलोलिता ।
श्रृङ्गकोटिमणिभ्राजिमकुटेन विराजितम् ।
कर्णालम्बिशशिज्योतिर्धवलालम्बिचामरम् ।

पञ्चाशल्लक्षमानेन पादैःखुरवरैर्युतम् ।
दशसाहस्रविस्तारैरिन्द्रनीलमणिप्रभैः
खुराघृष्टगिरिव्रातं नादामोदित(नूदित)कन्दरम् ।
सास्नया लम्बितात्यच्छपञ्चसाहस्रयोजनम् ।
हुंभारवमहाभीतत्रैलोक्यतलवासितम् ।
कामधेनुगणैश्चैव कोटिभिःपरितो वृतम् ।
शरच्चन्द्रप्रभाभास्वद्गिरिमौलिविदारणम् ।
लम्बिना वृषणेनापि शतयोजनकेन च ।
वालेन त्रिंशत्साहस्रयोजनेन विल(नाव)लम्बिना ॥
चामराग्रमहाकेशपुच्छभारेण शोभितः ।
मुक्तामाणिक्यजालैश्च प्रोत्थितेनामितप्रभः ॥
तत्रास्ति गोपुरं शम्भोर्धाम तत्र महेशितुः ।
प्राकारराजद्वृषभं तस्येष्टं लिङ्गमैश्वरम् ।
कामधेनुरसोद्भूतैःपयोभिरभिषिच्य च

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

गन्धैर्बिल्वैश्च मन्दारैःपङ्कजैर्धूपदीपकैः ।
नैवेद्यैः पायसापूपताम्बूलच्छत्रचामरैः ।
सम्पूज्य स्तौति धर्मेशं भस्मरुद्राक्षशोभितः ।
मुक्तात्रिपुण्ड्रफालाङ्कः शशिधृच्छृङ्गयोर्द्वयोः
पश्यन्संस्तौति हृष्टात्मा नादकीलितदिक्तटः ।

धर्म उवाच

दक्षपक्षकृतशिक्षमहोक्षो-
द्वाहिताक्षितिलकं सुरवीक्षम् ।
कुक्षिगाखिलजगद्गतधाक्षी(क्षिः)
पक्षिवाहसुतकायविलक्षम् ॥
भूमिमण्डलतलातिगमूलं
कोलरूपहरिणा न विलोकि ।
अब्जजाण्डजगती विवदेते
पादमौलिकलने तव शम्भो ।
सिन्धूनिषङ्गं वृषभं तुरङ्गं
महाङ्गचर्माम्बरमुद्यताङ्गम् ।
इन्दूत्तमाङ्गं हरये रथाङ्गं
भूते महोक्षाङ्गगतं हृदक्ष(ग)म् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सूतः

इत्थं स्तौति महादेवं धर्मो वृषवपुर्धरः ।
स एव धर्मो देवेशं वहत्यत्यन्तभासुरम् ।
प्राच्यां तद्गोपुरवरं प्राकारे गणपैर्वृतः ।
पाति तद्देवदेवस्य स्मरहर्तुश्च शासनात् ॥
श्रीमत्कैलासशृङ्गे शिववरगणपैः(सिन्धुरास्यानुगैश्च
कौमारैर्गणपैवृषेन्द्रगणपैः) रुद्रैःसमन्ताद्वृतम् ।
निखिलजगदधीन्द्रैर्विष्णुना देवसङ्घैः
श्रुतिगणमुनिवर्यैश्चिन्तितुं नाक्षमं तत् ॥

*इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने वृषस्तुतिर्नाम पञ्चविंशोऽध्यायः ॥*

## ॥ षड्विंशोऽध्यायः ॥

स्कन्द उवाच

तदुत्तरेऽस्ति प्राकारो वैडूर्यमणिरञ्जितः ।
वैडूर्यानन्तसूत्रैश्च पीतास्तत्रस्थदिक्तटाः ।
तत्र गोपुरमुत्तुङ्गं वैडूर्यमणिशोभितम् ।
आपीठशिखरप्रोतरुद्रचारित्रशोभितम् ।
पञ्चलक्षप्रमाणेन महावैडूर्यसद्वृषम् ।
पट्टिकादेवकोष्ठैश्च कपोतैः पालिपालकैः ॥
मणिकुम्भोल्लसच्छुभ्रं तत्तु पञ्चशताञ्चितम्

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नव लक्षं रुद्रगणाःशम्भोरुद्यतशस्त्रकाः ।
त्रिपुण्ड्रविलसत्फालाः कपर्दधृतचन्द्रकाः ।
मत्तमातङ्गसङ्काशा युवानो मृष्टकुण्डलाः ।
रक्षन्ति परितस्तच्च प्राकारवरगोपुरम् ।
तस्यान्तरे हि सुमहन्नानामणिगणान्वितम् ।
देव्यास्तु भवनं श्रीमत्सौधपङ्क्तिविभूषितम् ।
रम्यमाणिक्यखचितस्तम्भापारसहस्रकैः ।
हीरसारमहाधारैः पुष्परागालि नीलकैः ।
वैडूर्यकैश्च गोमेदैर्मुक्ताविद्रुमकल्पितैः ।
पुष्पराग मणिक्लृप्तैः गोमेदवलभीयुतैः ॥

हरिन्मणिवरोद्भूतैः मुक्तामणिसरोज्ज्वलैः ।
सुप्रवाललतास्तम्भैःकुरुविन्दोरुवेदिकैः ।
रत्नहीरकगोमेदपुष्परागविनिर्मितैः ।
बालप्रभाकराकारैर्मणिश्रृङ्गविराजितैः ।
देवीक्रीडारसैः सिंहैः पर्यन्तावलिशोभितैः ।
शरच्चन्द्रसमाकारैः स्फटिकोत्तमरञ्जितैः ।
विकृतास्यलसज्जिह्वैः सटाशोभितकन्धरैः ।
तत्रान्तर्भवनं देव्या दशसाहस्रकल्पितम् ।
योजनानां च परितो नवरत्नविचित्रितम् ।
उद्यदिन्दुकरप्रख्यं नानाशिल्पैकसुन्दरम् ।
तत्र देव्या महापीठं कोटिभास्करसन्निभम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

हीरताराराणाकारप्रभावलिविराजितम् ।
सौधमध्ये मणिक्लृप्तसिंहासनवराश्रया ।
हरिन्मणिमहामञ्चदोलान्दोलितविग्रहा ।
हल्लीसलास्यललितयोगिनीगणसेविता ।
कदाचित्सा महादेवी प्रवालवरपीठगा ।
प्रवालवरपीठस्थरत्नपीठवराश्रया ।
माणिक्यसौधमध्यस्था भूषिता चारुभूषणैः ।
कदाचित्पुष्परागोत्थसौधमध्यैकवासिनी ।
लीलाकौतुकभूताच्छरविसोमजकन्दुका
हननाच्च तयोरूर्ध्वाधोगतैः सततं द्विज ।
उदेति सूर्यश्चन्द्रश्चाप्यस्तमेत्यप्युदेत्त्यपि ।
करतालेन देव्यास्तु तस्मिन् सौधवराग्रतः ।
रत्नसौधतलोद्दामजालकान्तरसञ्चरा ।
सुधाकरकरास्फारप्रासादवरकौतुका ।
पुष्पवाटीपरिवृतरत्नसौधवराश्रया ।
मुकुरागारमध्यस्था कदाचिद्वरदा शिवा ।
पुष्पमण्टपमध्यस्था पुष्परागगृहान्तरे ।

रत्नवीटीकरा भास्वद्रत्नकङ्कणभूषिता ।
कदम्बवनमध्यस्थहीरसौधवराश्रया ।
लीलालालितरत्नाच्छकीरवीरकरा शिवा ।
शारिकाव्यक्तक गिरा तुष्टा नीलज सौधगा ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सुदीपितमहानीलकबरभ्रान्तिमस्तका ।
वरभूषणभूषाढ्या रणच्छिञ्जानपादुका ।
रत्नपात्रस्थितानेकफलालोकनतत्परा ।
पुष्पगुच्छमहाहाराप्यापीडामोदहस्तका ।
सुधामुखरितामोदा रत्नपात्रकरा क्वचित् ।
मकुटोद्दामचन्द्रांशुरश्मिसारालका शिवा ।
सुरत्नकन्तुकास्त्राविकेशपाशमनोहरा ।
योगिनीदर्शितानेकरत्नादर्शविलोकिनी ।
चन्द्रकान्तशिलाजालसौधमध्यनिवासिनी ॥
नयनाञ्जनकाक्लृप्तरत्नभ्राजच्छलालका
करमुद्राविनिर्यच्छ्रीर्नखकाञ्चितमुद्रिका ।
हीरभ्राजितला रक्तच्छविका पदभासुरा ।
नीलवेणीचितानेकरत्नसेवन्तिकाततिः ।
महार्हहेमखचितवसनाञ्चलमौक्तिका ॥
परिधत्तेऽम्शुकं देवी मणिभ्राजिगृहान्तरम् ।
धूपधूमपरिष्कारगन्धबन्धैकसुन्दरम् ।
मणिहर्म्यान्तरे पीठे सुमनोगुच्छभासुरे ।
रत्नाम्शुदीपकोद्दामप्रभाभासितदिक्तटे ।
संस्थिता दर्शितानेकरुद्राणीवदनाम्बुजे ।
सुचन्दनद्रवासारवराङ्कितनुच्छविः ।
सुरमन्दारपुन्नागकेतकोद्भासिशेखरा ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चम्पकाशोकदमनोशीरकण्टसुपाटलैः
मल्लिका मालतीजातीधम्मिल्लभरशोभिता ॥
कस्तूरीचन्द्रगन्धाक्तपटवासैकसुन्दरा ॥

मृगनाभिसुगन्धोद्यत्कुचान्तरितभासुरा ।
निचोलग्रथितोद्दामभुजावलिविराजिता ।
रुद्राणीकरसिन्दूरकृतसीमान्तरेखिका ।
सुरत्नतिलकभ्राजिसोमधामसमानना ।
हस्ताङ्गुलीयविलसत्प्रभाभूषितदिक्तति: ।
वैदूर्यसौधमध्यस्थरुद्राणीनृत्तदर्शिनी ।
नीलरत्नकृतालाबुमणिसारिजहीरकैः ।
ऊर्ध्वबद्धमहातन्त्रीवीणावाद्यादरा क्वचित् ।
गायन्ति मधुरोदारं शिवनामैव सुन्दरम् ।
शरच्चन्द्राच्छनिकरा चामरैर्वीजिता क्वचित् ।
मयूरैर्मणिदण्डैश्च व्यजनैर्वीजिता शिवा ।
पर्वोत्थशर्वरीनाथतिरस्कारिमणीसरैः ।
भ्राजच्छत्रावृतमुखताम्बूलरसमोदिता ।
वीटिकालग्नसुकरा पश्यंश्चित्रपटं स्थिता ।
सदाशिवस्य सद्रूपं लिखितं लेखकेशितुः
विद्रुमाभरदच्छादिबिम्बाकारसुशोभिता ।
रत्नग्रैवेयचिन्ताकलोलमुक्तांशुसप्रभा ।
क्वणत्किङ्किणिकाभास्वद्रत्नहस्तसरैर्युता ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तपनोडुपविभ्राजिताटङ्कयुगलाधृतिः ।
उद्यत्कविनिभात्यच्छमुक्तानासावृतास्यका ।
रत्नगङ्गमहासारधारागृहवराश्रया ।
कटीतटनिबद्धाच्छरत्नकाञ्चीविराजिता ।
प्रपादपङ्कजोद्दाममणिमञ्जीरभासुरा ।
रणच्छिञ्जानमधुरहंसारावैकसुन्दरा ।
मराळराजगमना दिव्यहारावृताङ्गका ।
बङ्गिकानागबन्धोद्यद्बाहुवल्लीविराजिता ॥
कूर्पराग्रललन्मुक्तागुच्छसञ्छादि(सच्छयित)छविः ।
भालम्बितरत्नालिललामावलिशोभिता ।

सूर्यचन्द्राङ्कितोदारशिरोभूषणभूषिता ।
योगिनीकोटिभिस्तत्र सेविता परमेश्वरी ।
हरिन्मणिमहासौधे मुदिता संस्थिता शिवा ।
दिव्योपधानसङ्क्लृप्तमणिमञ्चे कृतास्तृते ।
धूपामोदितदिक्चक्रे मणिदीपमनोहरे ।
वितानलम्बिमुक्तौघगुच्छसञ्छादिताम्बरे ।
पादबाहूपधानेषु स्वास्तृते व्यहरच्छिवा ।
रुद्राणीगानधाराभिः वीणानादानुगा शिवा ।
श्रृण्वन्ती शिवनामानि संस्थिता वैद्रुमे गृहे ।
सुवर्णकदलीगुच्छैर्हरिन्मणिनिभैर्द्रुमैः ॥
तन्मध्ये स्फाटिकमणिकृतसौधवराश्रया ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तमालसालनीपादिवृतसौधे गरुत्मतः ।
मणिक्लृप्तमहापीठे संस्थिता मुग्धदर्शना ।
लावकानां मयूराणां कुक्कुटानां मनोहरम् ।
मेषसारङ्गशृङ्गोद्यत्स्फारनाराविदिक्तटम् ।
रम्यं रत्नाब्जिनीतीरं बद्धैर्दिक्षु मणीन्द्रकैः ।
सोपानतीरसङ्क्लृप्तमणिसुन्दरमण्टपे ।
रत्नपञ्जरमध्यस्थान् रत्नशारीशुकाञ्छिवा ।
पश्यन्ती दाडिमीबीजं ददाति शुकवक्त्रके ॥
पूगद्रुवेष्टितापारद्राक्षावल्लीसुगुच्छके ।
सन्ध्यावल्लीसुमारक्तचन्द्रिकापुष्पशोभिते ।
पर्यन्तकुल्यातीराच्छमणिबन्धसुधोपमः ।
पाथोजविकसत्फुल्लहल्लकामोदमोदिते ॥
पूगद्रुमौलिसञ्छादिमणिहर्म्योरुमञ्जगा ।
क्रीडाशिखण्डिविहित-ताण्डवं पश्यती शिवा ।
महामणीन्द्रसङ्क्लृप्त सौधैरुपरि कल्पिते ।
नानाचित्रपटीक्लृप्तपटाम्बरगृहादरा ।
तिरस्करिणिका क्लृप्तचतुर्दिक्षु मनोहरे ।

मणिकुम्भोद्यते देवी मणिस्तम्भविभूषिते ।
सखीभिःसह सँल्लापं कुर्वन्ती संस्थिता क्वचित् ।
रथाकारमहासौधे मणिचक्रैर्हयैस्तथा ।
पर्यन्त इव तत्सौधे सिह्महंसविराजिते ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तत्रैवान्तर्गृहे देव्याः क्रीडाभवनमीशितुः ।
श्रीचक्राकारमतुलं तन्मणीन्द्रमनोहरम् ।
सहस्रयोजनायामं मणिचित्रगवाक्षकैः ।
हंसपद्ममहाव्यालिपालीचित्रैर्विचित्रितैः ।
मणिस्तम्भमहासारधारारञ्जितभूतलैः ॥
वितानमालाकलितैर्मुक्तागुच्छालिलम्बितैः ।
मणिमञ्चैर्महापादैर्लम्बिनोऽधस्थितैरपि ।
तेषूद्यता महाशय्याः सोपधानमनोहराः ।
चन्द्रमण्डलसङ्काशाःफेनगोक्षीरसप्रभाः ।
सुमामोदितगन्धाढ्या मल्लिकापुष्पसंस्तृताः ।
भ्रमद्दीपगृहभ्राजन्मणिचित्रविभूषिताः ।
देवस्य देव्याःक्रीडादिरसचित्रोरुकुट्टिमाः ।
धूपवृक्षैर्दीपवृक्षैर्मणिक्लृप्तैःसहस्रशः ।
ताम्बूलकल्पपात्रैश्च मणिशृङ्गारकैः शुभैः ।
धूपपात्रैर्दीपपात्रैः पुष्प ताम्बूलपात्रकैः ।
फलपूर्णै रत्नपात्रैर्मणिकुम्भैः सुधायुतैः ।
धूमामोदिमणिद्योतिविराजितमनुत्तमम् ।
मणिपूत्तलिकाक्लृप्तचारुचामरवीजनैः ।
व्यजनादर्शताम्बूलधृतपुत्तलिकागणैः ।
गणैश्च रहितो देवःसखीविरहिता शिवा ।
तस्मिन् श्रीचक्रसौधे तु क्रीडतस्तौ शिवौ मुने ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्कन्द उवाच–

कैलासे नवशक्तिरत्नविलसत्पीठे महातत्त्वा-
ग्जाते नैकगकोटिविस्तरयुते श्रीचक्रमध्यङ्गते ।
बिन्दौ चन्द्र दिनेशकोटियुगले मञ्चे च तं पीठके
पञ्चब्रह्ममये वयं गिरिजया सार्धं हृदा दध्महे ॥
कैलासे नवरत्नहर्म्यविलसन्मञ्चे सुधाम्भोनिधे–
र्मध्ये कल्पकवाटिकापरिवृते चिन्तामणीभायुते ।
सार्धं यो जगदम्बया रविमयं चैकं सुधावर्ष्मणो
रूपं कन्दुकमुत्क्षिपत्यनुदिनं तेनैव रात्रिर्दिवा ॥
मूर्तियों विधिविष्णुरुद्रसुरराडष्टौ पुमर्थानपि
चत्वार्येव युगानि वेदनिवहं दिव्यं फलानां गणम् ।
कुर्वन्नेव चतुर्दिशात्मकमठावैचित्र्यचित्रे पटे
दीव्यन् सार्धमशेषभाग्यनिव–हे(हैःकृत्वा गृहं सम्मतम्)
–(कालं कर्म च पाशकं स हि शिवो दीव्यन्) सहास्तेऽम्बया

*इति श्रीशिवरहस्ये प्रथमांशे देवीप्रस्ताव वर्णनं नाम षड्विंशोऽध्यायः ॥*

## ॥ सप्तविंशोऽध्यायः ॥

स्कन्द उवाच–

तत्रैव देव्याः सदनं पुनरन्यन्मनोहरम् ।
गारुत्मतमणीभास्वच्छतयोजनविस्तृतम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वलभीरोचितानेकगवाक्षोद्यतकुम्भकम् ।
मणिपीठोज्ज्वलत्स्तम्भक्लृप्तविद्रुमपुत्रकम् ।
सुरत्नपनसैश्चैव सुरत्नकदलीफलैः ।
सुरत्ननारिकेलाच्छपूगसङ्घमनोहरम् ।
सुरत्नकेतकफलालम्बितच्छन्नभूतलम् ।
पुष्पमालारसास्वादभ्रमद्भ्रमरसङ्कुलम् ।
तस्मिन् दिव्ये महामञ्चे पुष्पशय्याविराजिते ।
दमनोशीरकायुक्तवितानाच्छादिताम्बरे ।
सुरत्नपङ्कजलसन्मालिकासमलङ्कृते ।
अम्लाने सर्वदा तस्मिन् मुकुरोत्तुङ्गकुट्टिमे ।
रुद्राणीभिः परिवृता नित्यमास्ते महेश्वरी ॥
सुपुष्पालकधम्मिल्लास्ताराधिपसमाननाः ।
तरुण्यो रूपसम्पन्नाः कुम्भिकुम्भाभसत्कुचाः ।
मणिग्रैवेयहाराढ्या मुक्तारत्नाङ्गदैर्युताः ।
मुक्तानासावृताःसर्वाश्चन्द्रिकाक्लृप्तशेखराः ।
दिव्याङ्गरागसुभगा रणन्मञ्जीरकाङ्घ्रयः ।
तास्तत्र सौधवर्येषु देव्यो विद्युल्लता इव ।
सञ्चरन्ति सदा देवीं सेवन्ते जघनोन्नताः ।
महार्हवसनोपेतास्तिलकालङ्कृताननाः ।
ताम्बूलरागरक्ताच्छबिम्बाधरमनोहराः ।
चामराग्रकराः काश्चित्काश्चिच्चन्दनधारिणः(ण्यः) ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

काश्चित्कालाञ्जिकापाणी(हस्ताः)काश्चिच्छत्रधरास्तथा ।
ताम्बूलरत्नपेटीं च धृत्वाञ्जनकरास्तथा ।
काश्चित्कङ्कतिकाहस्ता भूषापेटीधरास्तथा ।
हरिद्राकुङ्कुमहस्ता तथालक्तकधारिणी ।
(सिन्दूरधारिणी) काश्चि(चि)त् पादुकासक्तसत्करा ।
रत्नहेमाम्बरादीनि मणिप्रोद्यन्निचोलकम् ।
रत्नवीणाधरा काचिल्लीलाशुककरा तथा ।
हरिन्मणिमहापिञ्छमयूरवरधारिणी ।
रत्नादर्शकरा काचित् प्रफुल्लसुमधारिणी ।
चम्पकाशोकहस्ताश्च रत्नभृङ्गारसत्कराः ।
खड्गखेटकनिर्स्त्रिंशशरकार्मुकपाणयः ।
निषङ्गसज्जितकरा लीलाकन्दुकधारिणी ।
हल्लीसलास्यरत्नाच्छदण्डमण्डितसत्कराः ।
अक्षपेटीधराःकाश्चित् कस्तूरीगन्धसत्कराः
रत्नपात्रस्थितापारगन्धगन्धितदिक्तटाः ।
पटवाससुवासेन हारगुच्छकशेखरैः ।
पात्रैः प्रोद्यत्करा भान्ति काश्चिच्चूलकरास्तथा ॥
शारिकाबोधनोद्युक्ता देवीनामानि सादरम् ।
सुधूपवृक्षधारिण्यः परा दीपकरास्तथा ।
गन्धतैलावसिक्तोद्यद्दलकुम्भकरास्तथा ।
ताम्बूलपात्रविततकराः फलकरास्तथा ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पद्मोत्पलकराः काश्चिदङ्गरागकरास्तथा ।
फलजालयुतापारस्वर्णपात्रलसत्कराः ।
मणिकुम्भसुधापूरकराः काश्चिन्मनोहराः ।
एवं सेवन्ति ता देवीं रुद्राण्यः परितोऽम्बिकाम् ।
तत्तत्सेवारसाभिज्ञा देव्याश्चित्तानुवर्तिनीः(काः)

प्रासादेषु च मञ्चेषु मणिसिह्मासनेषु च ।
पुष्पशय्यां तथा काश्चित् कुर्वन्ति सुक(कु)थावृताम् ।
भक्ष्यभोज्यान्नकुशला पेये रसवरे तथा ।
देवीं सेवन्ति तास्तत्र रुद्राण्यो नवयौवनाः ।
तत्र देव्या महासौधे नवरत्नविचित्रितम् ।
गर्भागारं महेशस्य रम्यं देवीश्वरस्य च ।
प्राकारगोपुरोपेतं रत्नतोरणमण्डितम् ।
माणिक्यमुख(कु)रोद्दामरुद्रक्रीडावृषैर्युतम् ।
सुरम्यरत्नकलशपताकाभ्राजिशेखरम् ।
तत्र लिङ्गं सुधापूरधवलीकृतदिङ्मुखम् ।
काकोदरफणाभ्राजिबिल्वालङ्कृतमस्तकम् ।
सुधाधामक खण्डोद्यद्रत्नगोळकभूषितम् ।
तद्वै देवीश्वरं लिङ्गं पूजयत्यम्बिका सदा ।
सुधासागरनीरोत्थकलशैर्नवरत्नजैः ।
पञ्चामृतमहाधारागन्धामोदैश्च नीरकैः ।
यक्षकर्दमजालेपवेष्टनाम्बरसुन्दरम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

बिल्वचम्पकधुत्तूरलक्ष्मीनी(?) ।
जातीसारावलीशोभिलिङ्गमौलिमनोहरम् ।
तक्कोलागरुजोद्भूतधूपधूमैः शिवा तदा ।
कुरुविन्दमणिज्योतिर्दीपैरुद्योतितान्तरम् ।
सुपुण्डरीकमालाभिर्नवनीलोत्पलस्रजा ।
हरिन्मणिनिभैर्विल्वैः(बिल्वैः)स(स्व)हस्तैः पूजयेच्छिवा ।
भक्ष्यभोज्यवरान्नानां राशिभिः शैलकन्यका ।
ताम्बूलैःखदिरसार स्वर्णकर्पूर खण्डकैः ।
नीराजनैर्मुखरितशङ्खकाहलमर्दलैः ।
वीणावेणुजमड्डूत्थदुन्दुभ्यावातनिःस्वनैः ।
रुद्राणीनर्तनैश्चैव योगिनीगणवादनैः ।
त्रिकालं पूजयत्येव त्रिपुण्ड्रललितालका ।
रुद्राक्षकीलितापारमुक्तामणिसरोज्ज्वला ।
सोमशौचे वाससी सा अङ्गे धारिणी शिवा ।
संस्तुवन्ती महालिङ्गं देवीश्वरमतन्द्रिता ।
कृताञ्जलिपुटा देवी प्रहृष्टं चाष्टविग्रह ॥

देव्युवाच-

हर हर परिपाहि दीनबन्धो
पुरहर देव दयानिधान धीर ।
मुरहरपरिपूजिताङ्घ्रिपद्म

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

प्रकटसुधाकरशेखरोरुवीर ॥

करिवरखरचर्मवस्त्र शम्भो

उरगवरोत्तमहारमारमार ।

परिपाहि दयानिधान भर्ग

त्रिणयन कालगलाविहीनदेह ।

श्रुतिवरतुरगोत्तमाद्य शम्भो

गरगल नीलतमालपुष्पमौले ॥

भवभयहर कारणातिगान्तकारे

हरिगिरि शरवरकार्मुकात्तपाणे ।

परिपाहि विभो त्रिशूलपाणे

नरहरिकृत्तिवसान बालपाल ।

विधिकन्धरशोभिहस्तपद्मा-

नलनयनाग्निविदग्धकामदेह ।

इमांदवरसामजप्रकटस्तोभगुम्फादरं

(हिमाचलवरात्मजा स्तुतिवरे निबद्धादरं)

सनन्दनसनातनैःकलितवन्दनं शङ्करम् ।

अनिन्दितगुणोत्तमं सुमुनिवृन्दवृन्दारकैः

पिचण्डिलसुतुन्दिलैर्गणवरौघ(वरैः)प्रणृत्तादरम् ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्कन्द उवाच-

इति संस्तुवते(संस्तुवती)देवी देवीशं परमेश्वरम् ।
रुद्राणीगणसंवीतयोगिनीगणसेविता ।
महाकैलासमध्यस्था देवदेवाङ्कसंश्रया ।
सापि देवं जगन्माता पूजयत्यनिशं शिवा ।
देवदेवं महादेवं गोवृषोत्तमगामिनम् ।
वतंसितसुधाधामशेखरं श्रुतिसंस्तुतम् ।
जटालकं निटिलगानलनेत्रं महेश्वरम् ।
नीलकण्ठं विरूपाक्षं सोमसूर्यानलेक्षणम् ।
कुरङ्गरञ्जितकरं कालकालं कृपानिधिम् ।
भस्माभ्यक्तं त्रिपुण्ड्राङ्कं रुद्राक्षवरहारकम् ।
महोरगफणारत्नमालाकीलितकन्धरम् ।
उद्यदिन्दुकरप्रख्यं कर्पूराभकलेबरम् ।
दिव्यासिंहासनासीनं महाकैलाससौधगम् ।
गणस्कन्दमहानन्दिभृङ्गिचण्डीशसेवितम् ।
मकुटोद्दामगङ्गोत्थरयशोभितमस्तकम् ।
अब्जमित्राग्निनयनं सोमखण्डोज्ज्वलालकम् ।
उत्फुल्लपुण्डरीकाच्छमालाललितकन्धरम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

देवनन्दन मन्दार वरमालाविभूषितम् ।

खपटंपरितोदग्धत्रिपुरासुरगोपुरम् ।

अन्धकान्तकमाशास्यं स्वभक्तजनवत्सलम् ।

नमिता(प्रणता)नेक देवादिमकुटोज्ज्वलपादुकम् ।

वामदेवं महासामस्तोमस्तुतमतीन्द्रियम् ।

रथन्तररवप्रीतं राजद्राजन(राजद्योगीन्द्र)तोषितम् ।

महावैराजराजश्रीराजाराजकलाधरम् ।

सर्वोपनिषदां सारमेकीभूतं महेश्वरम् ।

ध्यायन्ती सा महादेवी स्वमनःपद्मसंश्रयम् ।

तद्ध्यानसारधाराभिः प्लाविताननपङ्कजा ।

नान्यत्साऽचिन्तयद्देवी जगज्जन्मादिसंस्थितिम् ।

स्कन्द उवाच–

इत्थं ध्यायति चन्द्रशेखरपदं प्रोत्फुल्लहृत्पद्मगं

देवी नन्दननन्दनेऽपि गिरिजा सा पारवश्यान्तरा ।

नान्यत्किञ्चिदमन्यत त्रिभुवने निःसारमेतज्जग-

तुच्छीकृत्य महाच्छमानसपरा स्वात्मानमीशं हृदि ॥

*इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने देवीपूजास्तुतिर्नाम सप्तविंशोऽध्यायः*

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ अष्टाविंशोऽध्यायः ॥

स्कन्द उवाच

तस्यान्तरे च प्राकारो नवरत्नशिलाचितः ।
अष्टाशीतिसहस्राणां योजनैश्च प्रकल्पितः ।
चतुर्दिशं महेशेन मनसैव प्रकल्पितः ।
ब्रह्माण्डोर्ध्वगमौली स प्रोद्यद्भानुसहस्रभाः ।
न देवा न च गन्धर्वा न यक्षोरगराक्षसाः ।
गणेन्द्रैरपि दुष्प्रेक्ष्यः प्राकारो रत्नकलिपतः ॥
तत्र शैलाः शिवेनैव अष्टदिक्षु प्रतिष्ठिताः ।
निषधो हेमकूटश्च विन्ध्यो मलयदर्दुरः ।
मन्दरो हिमवांश्चैव नीलोऽत्रैव प्रकाशितः ॥
तेषां तपस्यया शम्भुः संस्तुतो नितरां तदा ।
स्वावासेऽपि महाशैले महाकैलासपर्वते ।
तेषां तत्र निवसतिं ददौ कारुण्यतः शिवः ।
अन्यत्र ते शिलाशैलाः कैलासे रत्नसन्निभाः ।
तत्प्राकारस्याष्टकोणेषु विहिताः शूलपाणिना ।
पूर्वतो निषधो भाति चाग्नेय्यां हेमकूटकः ।
विन्ध्योऽसौ दक्षिणे भाति मलयो निर्ऋतौ स्थितः
वारुण्यां दर्दुरो भाति वायव्यां भाति मन्दरः
हिमवानुत्तरे भाति चैशान्यां नीलपर्वतः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

अष्टदिक्षु स्थिता एते महाकैलासपर्वते ।
स्वमौलिभिर्भासयन्ति दिशां स्तोमं नगोत्तमाः ।
तन्मौलिसौधशिखरैश्चन्द्रसूर्यादिकान्तिकैः ।
माणिक्यकान्तो निषधो ह्यैन्द्र्यामिन्द्रधनुःप्रभः ।
चन्द्र(इन्द्र)गोपनिभो भाति भाभासितदिगन्तरः ।
अभ्रङ्कषैः स्वशृङ्गाग्रैर्लेलिहान इवाम्बरम् ।
तन्मौलिषु स्थितापाररत्नगोपुरभासुरः ।
नानारुद्रावतारैश्च वृषभैश्चैव शोभितः ।
भाति भासितदिक्चक्रो मुष्णन् चक्षूंषि कान्तिभिः ।
तच्छैलमौलिजोत्तुङ्गगजरत्नोरुकुम्भकः ।
सहस्रसिन्धुरोत्तुङ्गधरपीठोऽमितप्रभः ।
महातलो महासौधः सहस्रस्तम्भमण्डितः ।
दाडिमीबीजसङ्काशःस्वच्छ कान्तिततोरुभाः ।
सोपानवेदिकोपेतःसहस्रतलमण्डितः ।
पद्मरागमणिस्तम्भः कलशैश्चैव शोभितः ।
नानारत्नमहामालापरिष्कृततदन्तरः ।
तद्रत्नरत्नकान्त्या च सैन्द्री दिग्रत्न वर्णका ।
विभाति मण्डलं भानोस्तत्सौधारुणकान्तिभिः ।
आरक्तं हि नभो विप्राः भाति तच्छैलकान्तिभिः ।
तत्रागरुमहाधूपैर्बहुलैर्गन्धवत्तरैः ।
प्रफुल्लवनजापारगन्धबन्धितमारुतैः .

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तत्र सिह्मासनासीनो देव्या साकं महेश्वरः ।
क्रीडत्यत्यन्तमुदितो गणवृन्दनिषेवितः ।
तदखण्डमहास्तम्भान् पद्मरागप्रकल्पितान् ।
स एव द्योतयत्यन्तः कोटिभास्करसप्रभः ।
पश्यन्नैन्द्रीं दिशं शम्भुस्तत्रैवाप्यमरावतीम् ।
तत्रेन्द्रसदनं देवानिन्द्रादीनपरानपि ।
देवानां नन्दनं फुल्लकुसुमामोदिमारुतम् ।
जिघ्रन्स्वाङ्गमहाहारकाकोदरसुपारणम् ।
सप्ताब्धिचलनाऽऽस्फालतरङ्गावलिमीश्वरः ।
फेनबुद्बुदजालैश्च शिवनन्दननन्दितः
तरङ्गहस्तश्च सदा नमन्त इव सागरान् ।
तत्तदब्धिमहाद्वीपमण्डलं सरितो नगाः ।
वनानि देवयानं च स्वर्गिणां च गतीस्तथा ।
भोगं पातं(प्राप्तं)कर्मिणां च पश्यन् हृष्यति चाम्बया ।
निषधेशालयं तत्रे मणिकुम्भमनोहरम् ।
निषधो मूर्तिमांस्तत्र तल्लिङ्गं पूजयंस्तदा ।
भस्मरुद्राक्षसम्पन्नो दिव्यैः पञ्चामृतैस्तदा ।
गन्धैश्चैव च वासोभिर्बिल्वमन्दारचम्पकैः ।
धूपैर्दीपैश्च नैवेद्यैस्ताम्बूलैश्च नमंस्तदा ।
प्रदक्षिणाभिः सततं निषधेशः स्तुवंस्थितः ।

**निषध उवाच—**

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

निषधेशं भवरोगभेषजं
सुनिषण्णं सकलेषु भूतवर्गे ।
विषमाक्षं कलुषैर्विहीनदेहं
प्रणमामीश्वरमेवमेव नित्यम् ॥

सूतः(स्कन्द उवाच)

एवं स्तौति सदा देवं निषधः प्राग्दिशि स्थितः
हेमकूटस्तथाग्नेय्यां दिशि मौलौ महाप्रभः ।
गोमेदकमहारत्नभासुरोन्नतमस्तकः ।
स्वकान्तिभिस्तदाग्नेयीं दिशं सम्राजयंस्थितः ।
गोपुरापारशिखरैःखमौलितटसंस्थितैः ।
महर्लोकातिगैःश्रृङ्गैर्महामणिवराङ्कितैः ।
रुद्रावतारचितैर्गोवृषोत्तममस्तकैः ।
मणिकुम्भैश्च विततै रत्नमालाविलम्बितैः ।
तत्रैव सौधःसुमहान् गोमेदमणिसुन्दरः ।
गोमेदमणिजोत्तुङ्गमहापालीसहस्रकः ।
सहस्रपालीपीठस्थस्तम्भविद्रुमपुत्रिकः ।
सहस्रतलसंयुक्तमणिधाराच्छपालिकः ।
तदाग्नेयमहाकोणगोपुरेष्वन्तरा स्थितः ।
वेदिकापट्टिकोपेतो देवगोष्ठैश्च मण्डितः ॥
ललामराजद्वृषभो वलभीपरिवेष्टितः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

बालार्कविततच्छाय: स्वच्छान्त: स्तम्भकान्तिकृत् ।
तस्मिन् मणिमये मञ्चे लम्बमाने च संस्थित: ।
मणिश्रृङ्खलसंराजद्वितानपरिवेष्टिते ।
कुथोपधानै:स्वास्तीर्णैस्तिष्ठतीश: सहाम्बया ।
आग्नेयबहुलामोदवनगन्धैश्च सुन्दरम् ।
मारुतो वाति धूपानां प्रमोदामोदसुन्दर: ।
तमालसुन्दरवनमग्निलोकविभूषणम् ।
अग्निदिक्सौधगैस्तत्र सेवितं सुमनोहरम् ॥
अग्नीश्वराभिधं लिङ्गं पूजयन्तो हि वह्नय: ।
आग्नेयगणपैश्चैव तत्र तल्लोकवासिभि: ।
पुरा समर्च्य तल्लिङ्गं सर्वभक्षकृदाह्वयात् ।
विमुक्त: स तदा वह्नि: तत्पश्यन् शङ्करोऽम्बया ।
तत्रत्यलोकनिचयं सप्ताब्धिपरिवेष्टितम् ।
द्वीपान्वनानि सरित: सश्यंत्यंवासमन्वित: [पश्यत्यम्बासमन्वित:] ।
हेमकूटो महाशैलो मूर्तिमाँल्लिङ्गमैश्वरम् ।
हेमकूटेश्वरं नाम्ना प्रतिष्ठाप्य क्रमादवै: ।
स्तौति देवं हेमकूटं भस्मरुद्राक्षधृङ्नग: ।

हेमकूट:—

पापाद्रिकूटकुलिशोत्तम हेमकूट
वीटीकृताखिल सुमेरुज हेमकूट ।


CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

प्रोद्ययत्सुधांशुचयमौलितटोरुभास्व–
त्कोटीर-घोटक कृतागमकूट पाहि ॥

इत्थं सदा हेमकूटस्तत्र स्तौति महेश्वरम्
शैलसौधकवरे परमेश्या
चारुचन्द्रशकलाङ्कितमौलिः ।
नन्दिभृङ्गिगणपैश्च सर्वतः
क्रीडति श्रुतिशिखामलवाक्यैः ॥

*इति श्रीशिवरहस्ये प्रथमांशे कैलासप्रासाद वर्णनं नाम अष्टाविंशोऽध्यायः*

## ॥ एकोनत्रिंशोऽध्यायः ॥

स्कन्द उवाच

यःयस्यर्ध(यः पस्पर्ध(र्धे)पुरा मेरुं विन्ध्योऽसौ चारुकन्दरः
यन्मौलिनिलया देवी सोऽयं पर्वतशेखरः ।
इन्द्रनीलमयस्तत्र दक्षिणो भाति भूधरः ।
लिहन् स्वजिह्वया लोकानास्ते सोऽत्यन्तसुन्दरः ।
त्यक्त्वा स्वानति जात्यन्त दुःखं तत्र घटोद्भवात् ।
[त्यक्त्वा स्वानाप योऽत्यन्तदुःखं तत्र घटोद्भवात्] ।
सूर्यातिगगतीभिश्च शृङ्गैरङ्कितदिक्तटः ॥
महेशाश्रयजोन्मादमुदितो विन्ध्यभूधरः ।
तन्मौलिगोपुरोत्तुङ्गशिखरैर्वृषभैरपि ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

महानीलगणोद्यद्भानीलीकृतदिशोदरः ।
तन्मौलीतिलकोद्दामपुण्डरीकसहस्रकैः ।
दंष्ट्राकरालैर्विकृतैर्धारितः सौधसत्तमः ।
तत्रागरुमहाधूपैर्ज्वालाज्वलितदीपकैः ।
सहस्रतलसंयुक्तो(क्त)नीलकुम्भोज्ज्वलःस्थितः
नीलसारैश्च वृषभैर्मणिनेत्रैश्च शोभितः.
स्फटिकेन्द्रमहानीलजालकाङ्कितकुट्टिमः ।
नीलनीलोत्पलकृतमाला(जाल)विभूषितः ।
गवाक्षित इवाभाति चाम्बरं तत्र सुन्दरम् ।
तस्मिन्त्सौधोत्तमे मञ्चे चेन्द्रनीलोरुपादके ।
तस्मिन्मञ्चोपरि लसन्नीललोहित ईश्वरः ।
देव्या सहास्ते नितरां गणवृन्दनिषेवितः ॥
पश्यन्यामीं दिशं शम्भुर्यमं सम्यमिनीश्वरम् ।
नारकाणां विचित्राणां गतयस्तत्र शङ्करः ।
क्लिश्यमानान् दह्यमानान्पाच्यमानान्महेश्वरः ।
अशैवानपि पापिष्ठान्भस्मरुद्राक्षवर्जितान् ।
शिवनैवेद्यरहितान्मलांशांस्तत्र शङ्करः
सप्तांब्धिवेष्टितापारभूमिभागान् महेश्वरः
नगांश्च सरितःपुण्या वनान्युपवनानि च ।
क्रीडत्यत्यन्तमुदितो देवो देव्या महेश्वरः ।
विन्ध्यमौलिमहासौधे नीलेन्द्रमणिकल्पिते ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

विन्ध्यो विन्ध्येश्वरं लिङ्गं तत्र सम्पूज्य भक्तितः ।
पञ्चामृतैः फलरसैश्चन्दनैर्धूपदीपकैः ।
बिल्वचम्पकमन्दारकरवीरसुपङ्कजैः ।
प्रदक्षिणानतीभिश्च मणिनीराजनैरपि ।
सम्पूज्य विन्ध्यःसंस्तौति भक्त्या विन्ध्येश्वरं शिवम् ॥

(विन्ध्यः उवाच)

विन्ध्येश वन्ध्यदिवसो न भवेत्कदाचित्
त्वत्पादपूजन नतिस्तुतिभिर्ममाद्य(विहीनः)
वन्ध्योऽपि त्वत्पदनिवेदितभोज्यभुक्स्यात्
विन्ध्योपमं दृढतरं हि सुतं लभेत ॥

सूतः—

इत्थं स्तौति सदा विन्ध्यो विन्ध्येशं तत्र शैलराट् ।
मलयो नैरृते भाति राजत्सुन्दरशेखरः ।
पुष्परागमणिप्रख्यनानानिर्झरकन्दरः ।
रम्यश्रृङ्गाग्रविलसद्गोपुरावलिभासुरः ।
रुद्रक्रीडादिसहितो ललामवृषभाञ्चितः ।
स्वप्रभाभासितोल्लासिसर्वलोकातिगो नगः ।
भाति भूमिधरस्तत्र सौधोत्तमविभूषितः ।
सहस्रसारसोत्तुङ्गशिरोभिर्धारितो महान् ।
पुष्परागमणिक्लृप्तसहस्रस्तम्भमण्डितः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पराघ्यं रत्नखचितः सिंहासनवराश्रयः ।
रत्नगुच्छमहापुष्पसरालम्बितपीठभूः ।
तत्राच्छभूषणोपेतो देव्या क्रीडति शङ्करः ।
महामलयजोद्भूतचन्दनामोदिमारुतैः ।
चन्द्रचन्दनलिप्ताङ्गो महाकल्पकपुष्पधृक् ।
गुग्गुलूद्दामसुभगो धूपामोदितदिक्तटः ।
तां निर्ऋतिदिशं शम्भुःपश्यन्निर्ऋतिजान्गणान् ।
कृष्णान् करालान् विकटान् निस्त्रिंशवरधारिणः ।
सप्ताम्बुधीनां कोणानि तदन्तर्गभूमपि( ?) ॥
द्वीपांश्च सरितः शैलान्वनानि च महेश्वरः ।
मलयेन स्वनाम्ना वै लिङ्गं तन्मलयेश्वरम् ।
मणिधामगतं तत्र(तच्च)पूजितं सर्वकामदम् ।
पञ्चामृतैश्चन्दनैश्च बिल्वमन्दारचम्पकैः ।
धूपैर्दीपैश्च नैवेद्यैःप्रणामप्रक्रमादिभिः ।
संस्तुतं परया भक्त्या गिरिणा मलयेन च ।

[मलयः – उवाच]

मलयेश महेश शङ्कर
प्रमथाधीश्वर चारुचन्द्रमौले ।
त्वयि जातं जगदेतदेव शम्भो
प्रलयं याति लये त्वदीयकुक्षौ ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

इत्थं स्तौति सदा देवं मलयः शैलसत्तमः ।
दर्दुरः पश्चिमे भाति नानाश्रृङ्गवरालयः ।
वैडूर्यसारसुभगस्तत्सूत्रच्छविना ततः ।
तन्मौलिगोपुराकारशिखरैरतिभासुरः ।
रुद्रावतारचरितैर्महोक्षगणसङ्कुलः ।
दोधूयमानश्रृङ्गाग्रपताकावलिशोभितः ।
महाशार्दूलसाहस्रधरितस्तन्मणिप्रभः ।
सहस्रस्तम्भसम्युक्तो वेदिकापट्टिकान्वितः ।
मुक्ताच्छगुच्छसञ्छादिवितानविततांम्बरः ।
धूपामोदादिबहुलगन्धनन्दितदिक्तटः ।
वैडूर्यसारगर्भाच्छसुन्दरान्तरकाञ्चितः ।
तत्र सिंहासनं दिव्यं पञ्चयोजनकल्पितम् ।
परार्घ्यास्तरणोपेतं तस्मिन् देव्या महेश्वरः ।
विहरत्यान्तरगणैर्वरुणो वारुणीं श्रितः ।
दिशं पयोधिनाथेन पालितां यादसां तदा ।
वैडूर्यरत्नमकुटबद्धेन्दुशिशुशेखरः ।
मणिकुण्डलगण्डोद्यत्प्रभाधवलिताङ्ककः ।
वलयाहीश्वरोद्भासिफणाफणितहस्तकः ।
कृष्णागरुसुपुष्पोत्थधूपधारानुरञ्जितः ।
महार्हवसनोपेतश्चलच्चामरवीजितः ।
तद्वैडूर्यमहासूत्रधाराविद्योतितान्तरः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पश्यन्पश्चिमदिङ्नाथं वरुणं तद्गणानपि ॥
पाशहस्तान्हरिद्वर्णान् करालारुणदंष्ट्रकान् ।
तत्र सप्ताब्धिवलयं नदीनदवनानि च ।
देवभागांश्च तत्रत्यान्क्षेत्राणि च महेश्वरः ।
विहरत्यम्बया सार्धं सौधे तस्मिन्पिनाकधृक् ।
दर्दुरेशाभिधं तेन पूजितं दिव्यधामगम् ।
पञ्चामृतासेचनैश्च गन्धैर्बिल्वैश्च पङ्कजैः ।
धूपैर्दीपैश्च नैवेद्यैर्नमनप्रक्रमैःस्तवैः ॥
तुष्टाव दर्दुरो देवं दर्दुरेशं महेश्वरम् ।

दर्दुर उवाच–

पापापारमतङ्गकुम्भहरणे त्वं शङ्करो दर्दरो
भीमोऽहीश्वरकङ्कणोत्तमलसत्पाणीनखोद्यत्प्रभः ।
सिह्मः सर्वसुरेश्वरो हि भगवानर्धेन्दुजूटोज्ज्वलः
सर्वेषां तरिता गरं जरयिता कोशो गुणैर्वाचकः ॥

*इति श्रीशिवहस्ये प्रथमांशे शैलसौधवर्णने*
*एकोनत्रिंशोऽध्यायः ।*

## ॥ त्रिंशोऽध्यायः ॥

स्कन्दः

वायव्यां मन्दिरस्तत्र मणिसुन्दरकन्दरः ।
महेशस्य प्रियो नित्यं सर्वमन्दारनन्दितः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मन्दारतरुभिस्तस्य मौलिस्थैर्द्योतिता दिशः ।
हरिन्मणिप्रभाधारपरिष्टुतदिगन्तरः ।
सोऽयुतं योजनायामैर्विस्तारोच्छ्रायविस्तरः ॥
अतुलः सर्वशिखरिशिखाव्रातैकसुन्दरः ।
चन्दनानन्दितमुखः सुमगन्धोज्ज्वलच्छिखः ।
रत्नसालतमालालिमौलिपालिविराजितः ।
तत्रैव मन्दरोद्दामशेखरैरमितप्रभैः ।
विभान्ति तद्धरिमणिहरिताः शाद्वलोपमाः ।
चकास्ति तद्दिशां चक्रं नानापक्षिमृगैर्युतम् ।
तन्मौलिगोपुरापारकलशद्योतिताम्बरः ।
रुद्रावतारचरितैर्धेनुपोतगणैः शुभैः ।
सहस्रहंसमौलिस्थसौधराजविराजितः ।
वेदिसोपानकोपेतः सहस्रस्तम्भमण्डितः ।
तलैर्वलितपालीभिर्वलभीभिर्विचित्रितः ॥
तस्यान्तर्मणिवादाब्जस्वच्छसिंहवरासनम् ।
साम्राणिधूपबहुलगन्धगन्धवहाश्रयः ।
रत्नजालमहासालजालकावलिकीलितः ।
मन्दारोत्थमहानन्दसुमसुन्दरमारुतः ।
दिव्यमन्दारजामोदफुल्लमालावृतोदरः ।
हरिन्मणिमहादीपसारधारावृतान्तरः ।
तत्र दिव्यहरित्कान्त्या वामभागस्थया शिवः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सेवितो हरितोद्दामपादमञ्चेऽधिसंस्थितः ।? ॥
वायुं सत्यवदालोकांस्तत्रत्यान्गणपानपि ।
सागरान्तरगान्द्वीपान्वनानि सरितो नगान् ।
देवलोकांस्तथा देवो देव्यै लोकान्प्रतीक्षयन् ।
मन्दरेणार्चितं तत्र लिङ्गं सुन्दरमन्दिरम् ।
नाम्नैव मन्दरेशानमिन्दुकुन्दसमप्रभम् ।
पञ्चामृतैस्तथा नीरैश्चन्दनैर्बिल्वपल्लवैः ।
अरविन्दमरन्दैश्च मन्दारतरुजैः सुमैः ।
धूपैर्दीपैश्च नैवेद्यैर्नमनप्रक्रमैस्तथा ।
आनन्दसुन्दरोदारस्तवैस्संस्तौति भक्तितः ।

मन्दरः (उवाच) –

श्रीमन्दरेश विविधागममौलिबृन्द-
सन्दोहनन्दितपदाम्बुजभृङ्गभावम् ।
सम्प्रार्थयामि तरुणेन्दुकलाललाम
वृन्दारवन्दितपदाम्बुजसेवयाहम् ॥

सूतः-

इत्थं स्तौति सदा देवं मन्दरश्चारुकन्दरः ।
मम मातामहोद्दामशेखरैरर्दिता दिशः ।
हीरसारमयो भाति हिमवान् गगनातिगः ।
हिमासारमहाधारशक्तिकान्तशिरो(लो)पलः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तत्कान्तिकान्तिता लोका नानागोपुरभासुरः ।
रुद्रावतारचितैर्वृषस्तोमवि(मेन)राजितः ।
नियुतं योजनायामः कैलासोत्तरभागगः ।
सहस्रकेसरिसटातटभ्राजिसुपाण्डरः ।
तद्धारितमहाहीरप्रासादोद्यच्छिखाश्रयः ।
सहस्रस्तम्भसंयुक्तो रम्यसोपानवेदिकः ।
महाहिमघनीभूतचन्द्रस्फटिकपीठकः ।
सम्फुल्लामोदिविपिनसुमगन्धितमारुतः ।
शिलारसमहारीतिगन्धमाद्यत्सुरद्रुमः ।
तक्कोलागरुसम्मोदि बोधिचन्दनमस्तकः ।
कुरवाशोकबहुलचम्पकोद्दाम गन्धितः ।
कर्णिकारमहावक्त्रस्तिलकाङ्कितमस्तकः ।
कुटजोद्दाममुकुटोवटासटजटाधरः ।
त्रिपुण्ड्रककृताकार–(ज्वलितत्त्रिपुण्ड्रकाकार–)
तक्कोलाङ्कोलसुन्दरः ।
महाहिमकराकारमहाहिवरधृङ् नगः ।
हरमौलिजटोल्लासिहिमधामोज्ज्वलत्प्रभः ।
दिव्यगङ्गापयःपूरनिर्झरावृतकन्दरः ।
स्वकीयमौलिसौधस्थपङ्कजाकारसप्रभः ।
गौरीशङ्करपादाब्जध्याननिर्धूतहृत्तमाः
जामातृकन्यकानन्दप्रीत्या शैलेश्वरस्तदा ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नितरां हर्षवर्षाश्रुकणान्मुञ्चन्निव स्थितः ॥
नीलपीतारुणापाररीतिनिर्यत्सुकन्ध(द)रः ।
तत्र तच्छैलशिखरे महाहीरोपलैः कृते ।
हीरजालकसञ्छन्ने हीरमञ्चाच्छपादुके ।
परार्घ्यास्तरणास्तीर्णे तगरोद्दामधूपिते ।
हीरकान्तमणिज्योत्स्नानिवारिततमोगणे ।
महाहीरमणिव्रातकल्पभूषितविग्रहः ।
देव्या हरिन्मणितत(प्रख्य)शरीरवरकान्तया ।
नितरां मञ्चमध्यस्थो भाति भाभिर्महेश्वरः ।
स्वपितुः शिखरे देवी नितरां तोषवेषभूः ।
रमयत्येव देवेशं यथा कन्या पितृक्षये ।
भर्त्रा नित्यं प्रमोदेत न तथा श्वशुरालये ।
देव्या विहरतीशानः पश्यन्धनपतेर्दिशम् ॥
यक्षोगणोषितां तत्र तथैवैलिबिलेः पुरीम् ।
शातकुम्भमहाभूमिमुत्तरांश्च कुरूंस्तथा ।
देवोद्यानानि पुण्यानि सप्ताब्धिपरिवेष्टनम् ।
स्वर्णतालवनं तत्र तत्फलामोदिगन्धभूः ।
ताम्रपृष्ठां तथा भूमिं सहस्रं योजनायताम् ।
सुधासागरमध्यस्थमणिद्वीपं शिवप्रियम् ।
नीपापारवनं तच्च रत्ननीपैः समावृतम् ।
हिमशैलामलाकारधारासौधे महेश्वरः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

देव्या विहरति स्वैरं चलच्चामरवीजनैः ।
रत्नचाम्पेयमालाभिर्भूषितस्तत्र शङ्करः ।
गणेन्द्रैरुद्यतलसत्त्रिशूलकरभासुरैः ।
हिमाचलेश्वरं लिङ्गं चन्द्रस्फटिकधामगम् ।
अपारवरिवस्याभिर्हिमशैलेन चार्चितम् ।
पञ्चामृतैः फलरसैः सुगन्धैर्यक्षकर्दमैः ।
बिल्वारविन्दकल्हारैश्चम्पकैर्वकसम्भवैः ।
धूपदीपोपहारैश्च प्रणामप्रक्रमादिभिः ।
अस्तौषीद्धिमशैलेशं हिमवांश्च कृताञ्जलिः ।

हिमवान् [उवाच]

परिणतहिमधामकान्तिराज-
ज्जटया लम्बितगङ्गयोरुहासम् ।
भवदाननपङ्कजोत्पलाभैः—
रविसोमानललोचनैर्विलोकयाशु ॥

सूतः

इत्थं हिमाचलः स्तौति हिममौलिमहेश्वरम् ।
नीलो विभाति चैशान्यां कैलासामलपर्वते ॥
रम्यसानुशतोपेतः सहस्रशिखरैर्युतः ।
नीलोऽपि वामतः शैलः प्रवालमणिभासुरः ॥
उदारतरगम्भीरशिखरालेढिंबरः (लीढ दिङ्मुखः) ।

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

(लेडिताम्बरः लीढदिव्यभूः)
ईशान्यां गोपुरैर्भाति रुद्रक्रीडास्थलैर्वृतः ।
उद्यद्द्युमणिसङ्काशकलशैरतिभासुरः ।
भूसुराणां च शरणैः सुम्भासुरनगावृतः ।
महागोपतिभिर्युक्तो विद्रुमाभोऽरुणोरुभाः ।
तन्मौलिमणिगात्युच्चप्रवालपरिकल्पितैः ।
महाशरभसाहस्रैर्धारितः सौधसत्तमः ।
हृत्तमोनाशकस्तत्र रम्यो भूसुरभासुरः ।
तत्र राजन्ति विविधवेदिसोपानपेटिकाः ।
सहस्रस्तम्भसंयुक्तः प्रवालमणिकल्पितः ।
सौधराडगमौलिस्थो भात्युद्यत्तरणिप्रभः ।
सहस्रतलमौलिस्थः प्रवालमणिकुम्भवान् ।
प्रवालवर्तुलात्यच्छमालागुच्छैकशोभितः ।
तत्रैव सुमनामोदमाद्यद्घुङ्कृतषट्पदः ॥
तत्प्रवालमणिज्योत्स्ना निवारिततटिद्द्युतिः ।
तस्मिन्प्रवालपादाच्छमञ्चके स्तरणास्तृते ।
देव्या विहरति प्रीत्या चन्द्रचूडो महेश्वरः ।
सप्ताब्धिवेष्टितापारभूमींश्च द्वीपकानपि ।
वनानि सरितःशैलान्क्षेत्राण्यपि महेश्वरः ।
ईशानलोकं तत्रैव नानारुद्रगणैर्वृतम् ।
दिव्यन्तरिक्षभूमिस्थैर्हेतिपाशधरैर्युतम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वृक्षौषधीष्वथान्ने च(रण्ये)पथि शैलेषु ये चराः ।
ललामराजच्चन्द्रार्कैर्जटामकुटशोभितैः ।
गणेन्द्रैरुरगेन्द्रैश्च क्रोधारुणितलोचनैः ।
ब्रह्माण्डदलनैश्चैवाप्यापीतार्णवघोषकैः ।
युतमीशानमाशास्यः पश्यत्यम्बासमन्वितः ॥

सूतः–( ? ) [स्कन्दः]

तत्तन्नगवरोद्दामशिखरेषु शिवालयाः ।
परितः सन्ति तेषां तु नाम्ना लिङ्गोत्तमान्यपि ।
श्रृणुष्व जैगीषव्य त्वं पापभङ्गाय केवलम् ।
निषधेशो हेमकेशो विन्ध्येशो मलयेश्वरः ।
दर्दरेशो मन्दरेशो हिमशैलेश्वरो हरः ।
नीलेश्वरो हि परितो महासौधवराश्रयाः ।
रम्यगोपुरकोपेता नगास्तत्र वपुर्धराः ।
पूजयन्त्यत्र लिङ्गानि बिल्वपत्रैर्मनोहरैः ।
नीलोऽपि तत्र नीलेशं पूज्य सेकैः सुमैरपि ।
धूपदीपैश्च नैवेद्यैःस्तौति नीलेश्वरं शिवम् ।
स्वमौलिमणिजापारधामगं प्राञ्जलिस्तदा ।

नीलः-

नीललोहित महागरकन्धरा-
मलकपाल(भुजङ्गवि)भूषण ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कालकाल भगवन्कृपाम्बुधे

तारयाशु भवसंसृतिजालम् ।

इत्थं स्तुवन्ति ते शैला गिरीशा गिरिशं तदा ।

गिरयः

हर हर परमेश देवदेव

त्रिपुरयमान्धक जातभीतिनाश ।

अगपतितनयाधव प्रभो नः

परिपाहीश्वर देव सार्वभौम ॥

भवता भवतापहारिणा

वसता नाकशिरोत्थसौधमौलौ ।

वयमप्यमला नगाःशिलाभि-

र्नगवल्लीतृणपक्षिवीरुधैः(?) ।

सुमृगैरपि चन्द्रचूड शम्भो

गतिभाजः सुतरां च धन्य-धन्याः ॥

वेदेषु प्रथितोऽसि रुद्र भगवन् मीढुष्टमो बब्लुशः

बभ्रुः शम्भुरखण्डघोषकरणो ह्युग्रोऽसि भीमोऽसि च ।

अस्माकं त्वधिपोऽसि पाहि दयया ख्यातो गिरीशोऽपि च ।

*इति श्रीशिवरहस्ये प्रथमांशे शैलकृतस्तुतिर्नाम*

*त्रिंशोऽध्यायः*

*पूर्वभागः*

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

